॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

संपुटः १.

# बालकाण्डः ॥

## BALAKANDAM.

Published by:

The Educational Supplies Depot,

PALGHAT.

॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

## बालकाण्डः ॥

## Vol. I.



Publishers:

The Educational Supplies Depot,
PALGHAT.



1962 ] [ Price : Rs. 2/-

# ॥ विषयानुक्रमणिका ॥

॥ श्रीः ॥

# ॥ श्रीमद्रामायणपारायणोपक्रमः ॥

## स्मार्तसंप्रदायः ।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ २

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानासमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ४

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ५

यः पिबन्सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ६

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ७

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ८

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ९

आञ्जनेयमतिपाटलाननं
काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं
भावयामि पवमाननन्दनम् ॥ १०

यत्र यत्र रघुनाथकीर्तनं
तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं
मारुतिं नमत राक्षसान्तकम् ॥ ११

मनोजवं मारुततुल्यवेगं
जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शिरसा नमामि ॥ १२

यः कर्णाञ्जलिसम्पुटैरहरहः सम्यक्पिबत्यादरा-
द्वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥

तदुपगतसमाससन्धियोगं
सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं
दशशिरसश्च वधं निशामयध्वम् ॥ १४

वाल्मीकिगिरिसम्भूता रामसागरगामिनी ।
पुनातु भुवनं पुण्या रामायणमहानदी ॥ १५

श्लोकसारसमाकीर्णं सर्गकल्लोलसंकुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ १६

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १७

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
 मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
 व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

वामे भूमिसुता पुरश्च हनुमान्पश्चात्सुमित्रासुतः
 शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवा-
 न्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥

नमोऽस्तु रामाय सलक्ष्मणाय
 देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो
 नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ २०

---

श्रीवैष्णवसंप्रदायः ।

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ २

यः पिबन्सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ३

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ४

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ५

मनोजवं मारुततुल्यवेगं
जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शिरसा नमामि ॥ ६

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ७

आञ्जनेयमतिपाटलाननं
काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं
भावयामि पवमाननन्दनम् ॥ ८

यत्र यत्र रघुनाथकीर्तनं
तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं
मारुतिं नमत राक्षसान्तकम् ॥ ९

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १०

तदुपगतसमाससन्धियोगं
सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं
दशशिरसश्च वधं निशामयध्वम् ॥ ११

श्रीराघवं दशरथात्मजमप्रमेयं
सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददलायताक्षं
रामं निशाचरविनाशकरं नमामि ॥ १२

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

## माध्वसंप्रदायः ।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १

लक्ष्मीनारायणं वन्दे तद्भक्तप्रवरो हि यः ।
श्रीमदानन्दतीर्थाख्यो गुरुस्तं च नमाम्यहम् ॥ २

वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥ ३

सर्वविघ्नप्रशमनं सर्वसिद्धिकरं परम् ।
सर्वजीवप्रणेतारं वन्दे विजयदं हरिम् ॥ ४

सर्वाभीष्टप्रदं रामं सर्वारिष्टनिवारकम् ।
जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ ५

अभ्रमं भङ्गरहितमजडं विमलं सदा ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥ ६

भवति यदनुभावादेडमूकोऽपि वाग्मी
जडमतिरपि जन्तुर्जायते प्राज्ञमौलिः ।
सकलवचनचेतोदेवता भारती सा
मम वचसि विधत्तां सन्निधिं मानसे च ॥ ७

मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः ।
जयतीर्थाख्यतरणिर्भासतां नो हृदम्बरे ॥ ८

चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः ।
गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥ ९

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १०

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ११

यः पिबन्सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ १२

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ १३

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ १४

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः ।

आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥ १६

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १७

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामयणात्मना ॥ १९

आपदामपहर्तारं दातारं सर्वसम्पदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ २०

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

वन्दे वन्द्यं विधिभवमहेन्द्रादिवृन्दारकेन्द्रै-
र्व्यक्तं व्याप्तं स्वगुणगणतो देशतः कालतश्च ।

भूतावद्यं सुखचितिमयैर्मङ्गलैर्युक्तमङ्गैः
सानाथ्यं नो विदधदधिकं ब्रह्म नारायणाख्यम् ॥ २३

भूषारत्नं भुवनवलयस्याखिलाश्चर्यरत्नं
लीलारत्नं जलधिदुहितुर्देवतामौलिरत्नम् ।
चिन्तारत्नं जगति भजतां सत्सरोजद्युरत्नं
कौसल्याया लसतु मम हृन्मण्डले पुत्ररत्नम् ॥ २४

महाव्याकरणाम्भोधिमन्थमानसमन्दरम् ।
कवयन्तं रामकीर्त्या हनुमन्तमुपास्महे ॥ २५

मुख्यप्राणाय भीमाय नमो यस्य भुजान्तरम् ।
नानावीरसुवर्णानां निकषाश्मायितं बभौ ॥ २६

स्वान्तस्थानन्तशय्याय पूर्णज्ञानमहार्णसे ।
उत्तुङ्गवाक्तरङ्गाय मध्वदुग्धाब्धये नमः ॥ २७

वाल्मीकेर्गौः पुनीयान्नो महीधरपदाश्रया ।
यद्दुग्धमुपजीवन्ति कवयस्तर्णका इव ॥ २८

सूक्तिरत्नाकरे रम्ये मूलरामायणार्णवे ।
विहरन्तो महीयांसः प्रीयन्तां गुरवो मम ॥ २९

हयग्रीव हयग्रीव हयग्रीवेति यो वदेत् ।
तस्य निःसरते वाणी जह्नुकन्याप्रवाहवत् ॥ ३०

॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

## ॥ बालकाण्डः ॥

तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवम् ॥ १ ॥

को न्वस्मिन्सांप्रतं लोके गुणवान्कश्च वीर्यवान् ।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २ ॥

चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।
विद्वान्कः समर्थश्च कश्चैकप्रियदर्शनः ॥ ३ ॥

आत्मवान्को जितक्रोधो द्युतिमान्कोऽनसूयकः ।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ ४ ॥

एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥ ५ ॥

श्रुत्वा चैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः ।
श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ ६ ॥

बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।
मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥ ७ ॥

इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान्धृतिमान्वशी ॥

बुद्धिमान्नीतिमान्वाग्मी श्रीमाञ्शत्रुनिबर्हणः ।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥ ९ ॥

महोरस्को महेष्वासो गूढजत्रुररिंदमः ।
आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥

समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ।
पीनवक्षा विशालाक्षो लक्ष्मीवाञ्शुभलक्षणः ॥

धर्मज्ञः सत्यसंधश्च प्रजानां च हिते रतः ।
यशस्वी ज्ञानसंपन्नः शुचिर्वश्य समाधिमान् ॥

प्रजापतिसमः श्रीमान्धाता रिपुनिषूदनः ।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥ १३ ॥

रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥ १४ ॥

सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् ।
सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ॥ १५ ॥

सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः ।
आर्यः सर्वसमश्चैव सदैकप्रियदर्शनः ॥ १६ ॥

स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः ।
समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ॥ १७ ॥

विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ।
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥ १८ ॥

धनदेन समस्त्यागे सत्ये धर्म इवापरः ।
तमेवंगुणसंपन्नं रामं सत्यपराक्रमम् ॥ १९ ॥

ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ।
प्रकृतीनां हिते युक्तं प्रकृतिप्रियकाम्यया ॥ २० ॥

यौवराज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः ।
तस्याभिषेकसंभारान्दृष्ट्वा भार्याथ कैकयी ॥ २१ ॥

पूर्वं दत्तवरा देवी वरमेनमयाचत ।
विवासनं च रामस्य भरतस्याभिषेचनम् ॥ २२ ॥

स सत्यवचनाद्राजा धर्मपाशेन संयतः ।
विवासयामास सुतं रामं दशरथः प्रियम् ॥ २३ ॥

स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।
पितुर्वचननिर्देशात्कैकेय्याः प्रियकारणात् ॥ २४ ॥

तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह ।
स्नेहाद्विनयसंपन्नः सुमित्रानन्दवर्धनः ॥ २५ ॥

भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ।
रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥

जनकस्य कुले जाता देवमायेव निर्मिता ।
सर्वलक्षणसंपन्ना नारीणामुत्तमा वधूः ॥ २७ ॥

पौरैरनुगतो दूरं पित्रा दशरथेन च ।
शृङ्गिवेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ॥ २८ ॥

गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ।
गुहेन सहितो रामो लक्ष्मणेन च सीतया ॥ २९ ॥

ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ।
चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ॥ ३० ॥

रम्यमावसथं कृत्वा रममाणा वने त्रयः ।
देवगन्धर्वसंकाशास्तत्र ते न्यवसन्सुखम् ॥ ३१ ॥

चित्रकूटं गते रामे पुत्रशोकातुरस्तदा ।
राजा दशरथः स्वर्गं जगाम विलपन्सुतम् ॥ ३२ ॥

गते तु तस्मिन्भरतो वसिष्ठप्रमुखैर्द्विजैः ।
नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ॥

स जगाम वनं वीरो रामपादप्रसादकः ।
गत्वा तु सुमहात्मानं रामं सत्यपराक्रमम् ॥ ३४ ॥

अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ।
त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् ॥

रामोऽपि परमोदारः सुमुखः सुमहायशाः ।
न चैच्छत्पितुरादेशाद्राज्यं रामो महाबलः ॥ ३६ ॥

पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः ।
निवर्तयामास ततो भरतं भरताग्रजः ॥ ३७ ॥

स काममनवाप्यैव रामपादावुपस्पृशन् ।
नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ॥ ३८ ॥

गते तु भरते श्रीमान्सत्यसंधो जितेन्द्रियः ।
रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ॥ ३९ ॥

तत्रागमनमेकाग्रो दण्डकान्प्रविवेश ह ।
प्रविश्य तु महारण्यं रामो राजीवलोचनः ॥ ४० ॥

विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ।
सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ॥

अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ।
खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ॥ ४२ ॥

वसतस्तस्य रामस्य वने वनचरैः सह ।
ऋषयोऽभ्यागमन्सर्वे वधायासुररक्षसाम् ॥ ४३ ॥

स तेषां प्रतिशुश्राव राक्षसानां वधं वने ।
प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम् ॥

ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ।
तेन तत्रैव वसता जनस्थाननिवासिनी ॥ ४५ ॥

विरूपिता शूर्पणखा राक्षसी कामरूपिणी ।
ततः शूर्पणखावाक्यादुद्युक्तान्सर्वराक्षसान् ॥ ४६ ॥

खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ।
निजघान रणे रामस्तेषां चैव पदानुगान् ॥ ४७ ॥

वने तस्मिन्निवसता जनस्थाननिवासिनाम् ।
रक्षसां निहतान्यासन्सहस्राणि चतुर्दश ॥ ४८ ॥

ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्छितः ।
सहायं वरयामास मारीचं नाम राक्षसम् ॥ ४९ ॥

वार्यमाणः सुबहुशो मारीचेन स रावणः ।
न विरोधो बलवता क्षमो रावण तेन ते ॥ ५० ॥

अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ।
जगाम सहमारीचस्तस्याश्रमपदं तदा ॥ ५१ ॥

तेन मायाविना दूरमपवाह्य नृपात्मजौ ।
जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ।

गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ।
राघवः शोकसंतप्तो विललापाकुलेन्द्रियः ॥ ५३ ॥

ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ।
मार्गमाणो वने सीतां राक्षसं संददर्श ह ॥ ५४ ॥

कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ।
तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ॥ ५५ ॥

स चापि कथयामास शबरीं धर्मचारिणीम् ।
श्रमणीं धर्मनिपुणामभिगच्छेति राघवम् ॥ ५६ ॥

सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः ।
शबर्या पूजितः सम्यग्रामो दशरथात्मजः ॥ ४७ ॥

पम्पातीरे हनुमता संगतो वानरेण ह ।
हनूमद्वचनाच्चैव सुग्रीवेण समागतः ॥ ५८ ॥

सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः ।
आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः ॥ ५९ ॥

सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः
चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ॥

ततो वानरराजेन वैरानुकथनं प्रति ।
रामायावेदितं सर्वं प्रणयाद्दुःखितेन च ॥ ६१ ॥

प्रतिज्ञातं च रामेण तदा वालिवधं प्रति ।
वालिनश्च बलं तत्र कथयामास वानरः ॥ ६२ ॥

सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे ।
राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् ॥ ६३ ॥

दर्शयामास सुग्रीवो महापर्वतसंनिभम् ।
उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ॥

पादाङ्गुष्ठेन चिक्षेप संपूर्णं दशयोजनम् ।
बिभेद च पुनः सालान्सप्तैकेन महेषुणा ॥ ६५ ॥

गिरिं रसातलं चैव जनयन्प्रत्ययं तदा ।
ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः ॥ ६६ ॥

किष्किन्धां रामसहितो जगाम च गुहां तदा ।
ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ॥ ६७ ॥

तेन नादेन महता निर्जगाम हरीश्वरः ।
अनुमान्य तदा तारां सुग्रीवेण समागतः ॥ ६८ ॥

निजघान च तत्रैनं शरेणैकेन राघवः ।
ततः सुग्रीववचनाद्धत्वा वालिनमाहवे ॥ ६९ ॥

सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ।
स च सर्वान्समानीय वानरान्वानरर्षभः ॥ ७० ॥

दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ।
ततो गृध्रस्य वचनात्संपातेर्हनुमान्बली ॥ ७१ ॥

शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ।
तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् ॥ ७२ ॥

ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् ।
निवेदयित्वाभिज्ञानं प्रवृत्तिं च निवेद्य च ॥ ७३ ॥

समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ।
पञ्च सेनाग्रगान्हत्वा सप्त मन्त्रिसुतानपि ॥ ७४ ॥

शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् ।
अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् ॥

मर्षयन्राक्षसान्वीरान यन्त्रिणस्तान्यदृच्छया ।
ततो दग्ध्वा पुरीं लङ्कामृते सीतां च मैथिलीन् ॥

रामाय प्रियमाख्यातुं पुनरायान्महाकपिः ।
सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणन् ॥

न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ।
ततः सुग्रीवसहितो गत्वा तीरं महोदधेः ॥ ७८ ॥

समुद्रं क्षोभयामास शरैरादित्यसंनिभैः ।
दर्शयामास चात्मानं समुद्रः सरितां पतिः ॥ ७९ ॥

समुद्रवचनाच्चैव नलं सेतुमकारयत् ।
तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे ॥ ८० ॥

रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ।
तामुवाच ततो रामः परुषं जनसंसदि ॥ ८१ ॥

अमृष्यमाणा सा सीता विवेश ज्वलनं सती ।
ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् ॥

बभौ रामः संप्रहृष्टः पूजितः सर्वैदेवतैः ।
कर्मणा तेन महता त्रैलोक्यं सचराचरम् ॥ ॥८३

सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ।
अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् ॥

कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ।
देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् ॥

अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ।
भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः ॥ ८६ ॥

भरतस्यान्तिकं रामो हनूमन्तं व्यसर्जयत् ॥
पुनराख्यायिकां जल्पन्सुग्रीवसहितस्तदा ॥ ८७ ॥

पुष्पकं तत्समारुह्य नन्दिग्रामं ययौ तदा ।
नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः ॥

रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ।
प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः ॥ ८९ ॥

निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ।
न पुत्रमरणं केचिद्द्रक्ष्यन्ति पुरुषाः क्वचित् ॥

नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ।
न चाग्निजं भयं किंचिन्नाप्सु मज्जन्ति जन्तवः ॥

न वातजं भयं किंचिन्नापि ज्वरकृतं तथा ।
न चापि क्षुद्भयं तत्र न तस्करभयं तथा ॥ ९२ ॥

नगराणि च राष्ट्राणि धनधान्ययुतानि च ।
नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ॥ ९३ ॥

अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ।
गवां कोट्ययुतं दत्त्वा ब्रह्मलोकं गमिष्यति ॥

असंख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ।
राजवंशाञ्शतगुणान्स्थापयिष्यति राघवः ॥ ९५ ॥

चातुर्वर्ण्यं च लोकेऽस्मिन्स्वे स्वे धर्मे नियोक्ष्यति ।
दश वर्षसहस्राणि दश वर्षशतानि च ॥ ९६ ॥

रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ।
इदं पवित्रं पापघ्नं पुण्यं वेदैश्च संमितम् ॥ ९७ ॥

यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ।
एतदाख्यानमायुष्यं पठन्रामायणं नरः ।

सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥ ९८ ॥

पठद्द्विजो वागृषभत्वमीया ।
स्यात्क्षत्रियो भूमिपतित्वमीयात् ।

वणिग्जनः पण्यफलत्वमीया-

जनश्च शूद्रोऽपि महत्त्वमीयात् ॥ ९९ ॥

इति प्रथमः सर्गः ॥

## ॥ द्वितीयः सर्गः ॥

नारदस्य तु तद्वाक्यं श्रुत्वा वाक्यविशारदः ।
पूजयामास धर्मात्मा सहशिष्यो महामुनिः ॥ १ ॥

यथावत्पूजितस्तेन देवर्षिर्नारदस्तदा ।
आपृच्छयैवाभ्यनुज्ञातः स जगाम विहायसम् ॥ २ ॥

स मुहूर्तं गते तस्मिन्देवलोकं मुनिस्तदा ।
जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः ॥ ३ ॥

स तु तीरं समासाद्य तमसाया मुनिस्तदा ।
शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम् ॥ ४ ॥

अकर्दममिदं तीर्थं भरद्वाज निशामय ।
रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा ॥ ५ ॥

न्यस्यतां कलशस्तात दीयतां वल्कलं मम ।
इदमेवावगाहिष्ये तमसातीर्थमुत्तमम् ॥ ६ ॥

एवमुक्तो भरद्वाजो वाल्मीकेन महात्मना ।
प्रायच्छत मुनेस्तस्य वल्कलं नियतो गुरोः ॥ ७ ॥

स शिष्यहस्तादादाय वल्कलं नियतेन्द्रियः ।
विचचार ह पश्यंस्तत्सर्वतो विपुलं वनम् ॥ ८ ॥

तस्याभ्याशे तु मिथुनं चरन्तमनपायिनम् ।
ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुनिःस्वनम् ॥ ९ ॥

तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः ।
जघान वैरनिलयो निषादस्तस्य पश्यतः ॥ १० ॥

तं शोणितपरीताङ्गं चेष्टमानं महीतले ।
भार्या तु निहतं दृष्ट्वा रुराव करुणां गिरम् ॥ ११ ॥

वियुक्ता पतिना तेन द्विजेन सहचारिणा ।
ताम्रशीर्षेण मत्तेन पत्रिणा सहितेन वै ॥ १२ ॥

तथा तु तं द्विजं दृष्ट्वा निषादेन निपातितम् ।
ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत ॥ १३ ॥

ततः करुणवेदित्वादधर्मोऽयमिति द्विजः ।
निशाम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत् ॥ १४ ॥

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ १५ ॥

तस्यैवं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः ।
शोकार्तेनास्य शकुनेः किमिदं व्याहृतं मया ॥

चिन्तयन्स महाप्राज्ञश्चकार मतिमान्मतिम् ।
शिष्यं चैवाब्रवीद्वाक्यमिदं स मुनिपुंगवः ॥ १७ ॥

पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः ।
शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥

शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्यमनुत्तमम् ।
प्रतिजग्राह संहृष्टस्तस्य तुष्टोऽभवद्गुरुः ॥ १९ ॥

सोऽभिषेकं ततः कृत्वा तीर्थे तस्मिन्यथाविधि ।
तमेव चिन्तयन्नर्थमुपावर्तत वै मुनिः ॥ २० ॥

भरद्वाजस्ततः शिष्यो विनीतः श्रुतवान्मुनिः ।
कलशं पूर्णमादाय पृष्ठतोऽनुजगाम ह ॥ २१ ॥

स प्रविश्याश्रमपदं शिष्येण सह धर्मवित् ।
उपविष्टः कथाश्चान्याश्चकार ध्यानमास्थितः ॥

आजगाम ततो ब्रह्मा लोककर्ता स्वयं प्रभुः ।
चतुर्मुखो महातेजा द्रष्टुं तं मुनिपुंगवम् ॥ २३ ॥

वाल्मीकिरथ तं दृष्ट्वा सहसोत्थाय वाग्यतः ।
प्राञ्जलिः प्रयतो भूत्वा तस्थौ परमविस्मितः ॥

पूजयामास तं देवं पाद्यार्घ्यासनवन्दनैः ।
प्रणम्य विधिवच्चैनं पृष्ट्वानामयमव्ययम् ॥ २५ ॥

अथोपविश्य भगवानासने परमार्चिते ।
वाल्मीकये च ऋषये संदिदेशासनं ततः ॥ २६ ॥

ब्रह्मणा समनुज्ञातः सोऽप्युपाविशदासने ।
उपविष्टे तदा तस्मिन्साक्षाल्लोकपितामहे ॥ २७ ॥

तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः ।
पापात्मना कृतं कष्टं वैरग्रहणबुद्धिना ॥ २८ ॥

यस्तादृशं चारुरवं क्रौञ्चं हन्यादकारणात् ।
शोचन्नेव मुहुः क्रौञ्चीमुपश्लोकमिमं पुनः ॥ २९ ॥

जगावन्तर्गतमना भूत्वा शोकपरायणः ।
तमुवाच ततो ब्रह्मा प्रहस्य मुनिपुंगवम् ॥ ३० ॥

श्लोक एव त्वया बद्धो नात्र कार्या विचारणा ।
मच्छन्दादेव ते ब्रह्मन्प्रवृत्तेयं सरस्वती ॥ ३१ ॥

रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम ।
धर्मात्मनो गुणवतो लोके रामस्य धीमतः ॥ ३२ ॥

वृत्तं कथय वीरस्य यथा ते नारदाच्छ्रुतम् ।
रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः ॥ ३३ ॥

रामस्य सह सौमित्रे राक्षसानां च सर्वशः ।
वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः ॥ ३४ ॥

तच्चाप्यविदितं सर्वं विदितं ते भविष्यति ।
न ते वागनृता काव्ये काचिदत्र भविष्यति ॥

कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम् ।
यावत्स्थास्यन्ति गिरयः सरितश्च महीतले ॥

तावद्रामायणकथा लोकेषु प्रचरिष्यति ।
यावद्रामायणकथा त्वत्कृता प्रचरिष्यति ॥ ३७ ॥

तावदूर्ध्वमधश्च त्वं मल्लोकेषु निवत्स्यसि ।
इत्युक्त्वा भगवान्ब्रह्मा तत्रैवान्तरधीयत ॥ ३८ ॥

ततः सशिष्यो भगवान्मुनिर्विस्मयमाययौ ।
तस्य शिष्यास्ततः सर्वे जगुः श्लोकमिमं पुनः ॥

मुहुर्मुहुः प्रीयमाणाः प्राहुश्च भृशविस्मिताः ।
समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा ॥ ४० ॥

सोऽनुव्याहरणाद्भूयः शोकः श्लोकत्वमागतः ।
तस्य बुद्धिरियं जाता वाल्मीकेर्भावितात्मनः ।
कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम् ॥

उदारवृत्तार्थपदैर्मनोरम-
स्ततः स रामस्य चकार कीर्तिमान् ।
समाक्षरैः श्लोकशतैर्यशस्विनो
यशस्करं काव्यमुदारधीर्मुनिः ॥ ४२ ॥

तदुपगतसमाससंधियोगं
सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं
दशशिरसश्च वधं निशामयध्वम् ॥ ४३ ॥

इति द्वितीयः सर्गः ॥

# तृतीयः सर्गः

श्रुत्वा वस्तु समग्रं तद्धर्मात्मा धर्मसंहितम् ।
व्यक्तमन्वेषते भूयो यद्वृत्तं तस्य धीमतः ॥ १ ॥

उपस्पृश्योदकं सम्यङ्मुनिः स्थित्वा कृताञ्जलिः ।
प्राचीनाग्रेषु दर्भेषु धर्मेणान्वीक्षते गतिम् ॥ २ ॥

रामलक्ष्मणसीताभी राज्ञा दशरथेन च ।
सभार्येण सराष्ट्रेण यत्प्राप्तं तत्र तत्त्वतः ॥ ३ ॥

हसितं भाषितं चैव गतिर्या यच्च चेष्टितम् ।
तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यति ॥ ४ ॥

स्त्रीतृतीयेन च तथा यत्प्राप्तं चरता वने ।
सत्यसंधेन रामेण तत्सर्वं चान्ववेक्षितम् ॥

ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः ।
पुरा यत्तत्र निर्वृत्तं पाणावामलकं यथा ॥ ६ ॥

तत्सर्वं तत्त्वतो दृष्ट्वा धर्मेण स महाद्युतिः ।
अभिरामस्य रामस्य चरितं कर्तुमुद्यतः ॥ ७ ॥

कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरम् ।
समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम् ॥ ८ ॥

स यथा कथितं पूर्वं नारदेन महर्षिणा ।
रघुनाथस्य चरितं चकार भगवानृषिः ॥ ९ ॥

जन्म रामस्य सुमहद्वीर्यं सर्वानुकूलताम् ।
लोकस्य प्रियतां क्षान्तिं सौम्यतां सत्यशीलताम् ॥

नानाचित्रकथाश्चान्या विश्वामित्रसहासने ।
जानक्याश्च विवाहं च धनुषश्च विभेदनम् ॥ ११ ॥

रामरामविवादं च गुणान्दाशरथेस्तथा ।
तथा रामाभिषेकं च कैकेय्या दुष्टभावताम् ॥

विघातं चाभिषेकस्य रामस्य च विवासनम् ।
राज्ञः शोकविलापं च परलोकस्य चाश्रयम् ॥

प्रकृतीनां विषादं च प्रकृतीनां विसर्जनम् ।
निषादाधिपसंवादं सूतोपावर्तनं तथा ॥ १४ ॥

गङ्गायाश्चापि संतारं भरद्वाजस्य दर्शनम् ।
भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम् ॥ १५ ॥

वास्तुकर्मविधानं च भरतागमनं तथा ।
प्रसादनं च रामस्य पितुश्च सलिलक्रियाम् ॥

पादुकाग्र्याभिषेकं च नन्दिग्रामनिवासनम् ।
दण्डकारण्यगमनं विरोधस्य वधं तथा ॥ १७ ॥

दर्शनं शरभङ्गस्य सुतीक्ष्णेनापि संगतिम् ।
अनसूयानमस्यां च अङ्गरागस्य चार्पणम् ॥ १८ ॥

अगस्त्यदर्शनं चैव जटायोरभिसंगमम् ।
पञ्चवट्याश्च गमनं शूर्पणख्याश्च दर्शनम् ॥ १९ ॥

शूर्पणख्याश्च संवादं विरूपकरणं तथा ।
वधं खरत्रिशिरसोरुत्थानं रावणस्य च ॥ २० ॥

मारीचस्य वधं चैव वैदेह्या हरणं तथा ।
राघवस्य विलापं च गृध्रराजनिबर्हणम् ॥ २१ ॥

कबन्धदर्शनं चैव पम्पायाश्चापि दर्शनम् ।
शबर्या दर्शनं चैव हनूमद्दर्शनं तथा ॥ २२ ॥

ऋश्यमूकस्य गमनं सुग्रीवेण समागमम् ।
प्रत्ययोत्पादनं सख्यं वालिसुग्रीवविग्रहम् ॥ २३ ॥

बालिप्रमथनं चैव सुग्रीवप्रतिपादनम् ।
ताराविलापं समयं वर्षरात्रनिवासनम् ॥ २४ ॥

कोपं राघवसिंहस्य बलानामुपसंग्रहम् ।
दिशः प्रस्थापनं चैव पृथिव्याश्च निवेदनम् ॥

अङ्गुलीयकदानं च ऋक्षस्य बिलदर्शनम् ।
प्रायोपवेशनं चापि संपातेश्चैव दर्शनम् ॥ २६ ॥

पर्वतारोहणं चैव सागरस्य च लङ्घनम् ।
समुद्रवचनाच्चैव मैनाकस्यापि दर्शनम् ॥ २७ ॥

सिंहिकायाश्च निधनं लङ्कामलयदर्शनम् ।
रात्रौ लङ्काप्रवेशं च एकस्यापि विचिन्तनम् ॥

दर्शनं रावणस्यापि पुष्पकस्य च दर्शनम् ।
आपानभूमिगमनमवरोधस्य दर्शनम् ॥ २९ ॥

अशोकवनिकायानं सीतायाश्चापि दर्शनम् ।
राक्षसीतर्जनं चैव त्रिजटास्वप्नदर्शम् ॥ ३० ॥

अभिज्ञानप्रदानं च सीतायाश्चाभिभाषणम् ।
मणिप्रदानं सीताया वृक्षभङ्गं तथैव च ॥

राक्षसीविद्रवं चैव किंकराणां निबर्हणम् ।
ग्रहणं वायुसूनोश्च लङ्कादाहाभिगर्जनम् ॥ ३२ ॥

प्रतिप्लवनमेवाथ मधूनां हरणं तथा ।
राघवाश्वासनं चैव मणिनिर्यातनं तथा ॥ ३३ ॥

संगमं च समुद्रेण नलसेतोश्च बन्धनम् ।
प्रतारं च समुद्रस्य रात्रौ लङ्कावरोधनम् ॥ ३४ ॥

विभीषणेन संसर्गं वधोपायनिवेदनम् ।
कुम्भकर्णस्य निधनं मेघनादनिबर्हणम् ॥ ३५ ॥

रावणस्य विनाशं च सीतावाप्तिमरेः पुरे ।
विभीषणाभिषेकं च पुष्पकस्य निवेदनम् ॥ ३६ ॥

अयोध्यायाश्च गमनं भरतेन समागमम् ।
रामाभिषेकाभ्युदयं सर्वसैन्यविसर्जनम् ॥ ३७ ॥

स्वराष्ट्ररञ्जनं चैव वैदेह्याश्च विसर्जनम् ।
अनागतं च यत्किंचिद्रामस्य वसुधातले ।
तच्चकारोत्तरे काव्ये वाल्मीकिर्भगवानृषिः ॥ ३८ ॥

इति तृतीयः सर्गः ॥

# चतुर्थः सर्गः

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः ।
चकार चरितं कृत्स्नं विचित्रपदमात्मवान् ॥ १ ॥

चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः ।
तथा सर्गशतान्पञ्च षट् काण्डानि तथोत्तरम् ॥

कृत्वापि तन्महाप्राज्ञः सभविष्यं सहोत्तरम् ।
चिन्तयामास को न्वेतत्प्रयुञ्जीयादिति प्रभुः ॥

तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः ।
अगृह्णीतां ततः पादौ मुनिवेषौ कुशीलवौ ॥ ४ ॥

कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ ।
भ्रातरौ स्वरसंपन्नौ ददर्शाश्रमवासिनौ ॥ ५ ॥

स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥ ६ ॥

काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् ।
पौलस्त्यवधमित्येव चकार चरितव्रतः ॥ ७ ॥

पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम् ।
जातिभिः सप्तभिर्बद्धं तन्त्रीलयसमन्वितम् ॥ ८ ॥

हास्यशृङ्गारकारुण्यरौद्रवीरभयानकैः ।
बीभत्साद्भुतसंयुक्तं काव्यमेतदगायताम् ॥ ९ ॥

तौ तु गान्धर्वतत्त्वज्ञौ मूर्छनास्थानकोविदौ ।
भ्रातरौ स्वरसंपन्नौ गान्धर्वाविव रूपिणौ ॥ १० ॥

रूपलक्षणसंपन्नौ मधुरस्वरभाषिणौ ।
बिम्बादिवोद्धृतौ बिम्बौ रामदेहात्तथापरौ ॥ ११ ॥

तौ राजपुत्रौ कार्त्स्न्येन धर्माख्यानमनुत्तमम् ।
वाचोविधेयं तत्सर्वं कृत्वा काव्यमनिन्दितौ ॥

ऋषीणां च द्विजातीनां साधूनां च समागमे ।
यथोपदेशं तत्त्वज्ञौ जगतुस्तौ समाहितौ ॥ १३ ॥

महात्मानौ महाभागौ सर्वलक्षणलक्षितौ ।
तौ कदाचित्समेतानामृषीणां भावितात्मनाम् ॥

आसीनानां समीपस्थाविदं काव्यमगायताम् ।
तच्छ्रुत्वा मुनयः सर्वे बाष्पपर्याकुलेक्षणाः ॥ १५ ॥

साधु साध्विति चाप्यूचुः परं विस्मयमागताः।
ते प्रीतमनसः सर्वे मुनयो धर्मवत्सलाः॥ १६॥

प्रशशंसुः प्रशस्तव्यौ गायन्तौ तौ कुशीलवौ।
अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः॥

चिरानिर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितम्।
प्रविश्य तावुभौ सुष्टु तथा भावमगायताम्॥

सहितौ मधुरं रक्तं संपन्नं स्वरसंपदा।
एवं प्रशस्यमानौ तैस्तपः श्लाघ्यैर्महात्मभिः॥ १९॥

संरक्ततरमत्यर्थमधुरं तावगायताम्।
प्रीतः कश्चिन्मुनिस्ताभ्यां सस्मितः कलशं ददौ॥

प्रसन्नो वल्कलं कश्चिद्ददौ ताभ्यां महातपाः॥
अन्यः कृष्णाजिनं प्रादान्मौञ्जीमन्यो महामुनिः॥

कश्चित्कमण्डलुं प्रादाद्यज्ञसूत्रमथापरः।
औदुम्बरीं व्रसीमन्यो जपमालामथापरः॥ २२॥

आयुष्यमपरे चोचुर्मुदा तत्र महर्षयः।
आश्चर्यमिदमाख्यानं मुनिना संप्रकीर्तितम्॥ २३॥

परं कवीनामाधारं समाप्तं च यथाक्रमम् ।
अभिगीतमिदं गीतं सर्वगीतेषु कोविदौ ॥ २४ ॥

आयुष्यं पुष्टिजनकं सर्वश्रुतिमनोहरम् ।
प्रशस्यमानौ सर्वत्र कदाचित्तत्र गायनौ ॥ २५ ॥

रथ्यासु राजमार्गेषु ददर्श भरताग्रजः ।
स्ववेश्म चानीय ततो भ्रातरौ च कुशीलवौ ॥

पूजयामास पूजार्हौ रामः शत्रुनिबर्हणः ।
आसीनः काञ्चने दिव्ये स च सिंहासने प्रभुः ॥

उपोपविष्टः सचिवैर्भ्रातृभिश्च परंतपः ।
दृष्ट्वा तु रूपसंपन्नौ तावुभौ नियतस्तदा ॥ २८ ॥

उवाच लक्ष्मणं रामः शत्रुघ्नं भरतं तथा ।
श्रूयतामिदमाख्यानमनयोर्देववर्चसोः ॥ २८ ॥

विचित्रार्थपदं सम्यग्गायनौ समचोदयत् ।
तौ चापि मधुरं व्यक्तं सञ्चितायतनिःस्वनम् ।
तन्त्रीलयवदत्यर्थं विश्रुतार्थमगायताम् ॥ ३० ॥

ह्लादयत्सर्वगात्राणि मनांसि हृदयानि च ।
श्रोत्राश्रयसुखं गेयं तद्बभौ जनसंसदि ॥ ३१ ॥

इमौ मुनी पार्थिवलक्षणान्वितौ
कुशीलवौ चैव महातपस्विनौ ।
ममापि तद्भूतिकरं प्रचक्षते
महानुभावं चरितं निबोधत ॥ ३२ ॥

ततस्तु तौ रामवचःप्रचोदिता-
वगायतां मार्गविधानसंपदा ।
स चापि रामः परिषद्गतः शनै-
र्बुभूषया सक्तमना बभूव ह ॥ ३३ ॥

इति चतुर्थः सर्गः ॥

---

## पञ्चमः सर्गः

सर्वा पूर्वमियं येषामासीत्कृत्स्ना वसुंधरा ।
प्रजापतिमुपादाय नृपाणां जयशालिनाम् ॥ १ ॥

येषां स सगरो नाम सागरो येन खानितः ।
षष्टिः पुत्रसहस्राणि यं यान्तं पर्यवारयन् ॥ २ ॥

इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम् ।
महदुत्पन्नमाख्यानं रामायणमिति श्रुतम् ॥ ३ ॥

तदिदं वर्तयिष्यामि सर्वं निखिलमादितः ।
धर्मकामार्थसहितं श्रोतव्यमनसूयया ॥ ४ ॥

कोसलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥ ५ ॥

अयोध्या नाम नगरी तत्रासील्लोकविश्रुता ।
मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥

आयता दश च द्वे च योजनानि महापुरी ।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥

राजमार्गेण महता सुविभक्तेन शोभिता ।
मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ ८ ॥

तां तु राजा दशरथो महाराष्ट्रविवर्धनः ।
पुरीमावासयामास दिवं देवपतिर्यथा ॥ ९ ॥

कवाटतोरणवतीं सुविभक्तान्तरापणाम् ।
सर्वयन्त्रायुधवतीमुपेतां सर्वशिल्पिभिः ॥ १० ॥

सूतमागधसंबाधां श्रीमतीमतुलप्रभाम् ।
उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम् ॥ ११ ॥

वधूनाटकसंघैश्च संयुक्तां सर्वतः पुरीम् ।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ १२ ॥

दुर्गगम्भीरपरिखां दुर्गामन्यैर्दुरासदाम् ।
वाजिवारणसंपूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥ १३ ॥

सामन्तराजसंघैश्च बलिकर्मभिरावृताम् ।
नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥

प्रासादै रत्नविकृतैः पर्वतैरुपशोभिताम् ।
कूटागारैश्च संपूर्णामिन्द्रस्येवामरावतीम् ॥

चित्रामष्टापदाकारां वरनारीगणैर्युताम् ।
सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ १६ ॥

गृहगाढामविच्छिद्रां समभूमौ निवेशिताम् ।
शालितण्डुलसंपूर्णामिक्षुदण्डरसोदकाम् ॥ १७ ॥

दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा ।
नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमाम् ॥

विमानमिव सिद्धानां तपसाधिगतं दिवि ।
सुनिवेशितवेश्मान्तां नरोत्तमसमावृताम् ॥ १९ ॥

ये च बाणैर्न विध्यन्ति विविक्तमपरापरम् ।
शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥

सिंहव्याघ्रवराहाणां मत्तानां नदतां वने ।
हन्तारो निशितैर्बाणैर्बलाद्बाहुबलैरपि ॥ २१ ॥

तादृशानां सहस्रैस्तामभिपूर्णां महारथैः ।
पुरीमावासयामास राजा दशरथस्तदा ॥ २२ ॥

तामग्निमद्भिर्गुणवद्भिरावृतां
द्विजोत्तमैर्वेदषडङ्गपारगैः ।
सहस्रदैः सत्यरतैर्महात्मभि-
र्महर्षिकल्पैर्ऋषिभिश्च केवलैः ॥ २३ ॥

इति पञ्चमः सर्गः ॥

## ॥ षष्टः सर्गः ॥

— :o: —

तस्यां पुर्यामयोध्यायां वेदवित्सत्यसङ्गरः ।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥ १

इक्ष्वाकूणामतिरथो यज्वा धर्मरतो वशी ।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥ २

बलवान्निहतामित्रो मित्रवान् विजितेन्द्रियः ।
धनैश्च संचयैश्चान्यैः शक्रवैश्रवणोपमः ॥ ३

यथा मनुर्महातेजा लोकस्य परिरक्षिता ।
तथा दशरथो राजा वसञ्जगदपालयत् ॥ ४

तेन सत्याभिसंधेन त्रिवर्गमनुतिष्ठता ।
पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥ ५

तस्मिन् पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः ।
नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥ ६

नाल्पसंनिचयः कश्चिदासीत्तस्मिन् पुरोत्तमे ।
कुटुम्बी यो न सिद्धार्थो गोमांश्च धनधान्यवान् ॥ ७

कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित् ।
द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥ ८

सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः ।
उदिताः शीलवृत्ताभ्यां महर्षय इवामलाः ॥ ९

नाकुण्डली नामुकुटी नास्रग्वी नाल्पभोगवान् ।
नामृष्टो नानुलिप्ताङ्गो नासुगन्धश्च विद्यते ॥ १०

नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक् ।
नाहस्ताभरणो वापि दृश्यते नाप्यनात्मवान् ॥ ११

नानाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः ।
कश्चिदासीदयोध्यायां न च निर्वृत्तसङ्करः ॥ १२

स्वकर्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः ।
दानाध्ययउशीलाश्च संयताश्च प्रतिग्रहे ॥ १३

न नास्तिको नानृतको न कश्चिदबहुश्रुतः ।
नासूयको न चाशक्तो नाविद्वान् विद्यते क्वचित् ॥ १४

नाषडङ्गविदत्रासीन्नाव्रतो नासहस्रदः ।
न दीनः क्षिप्तचित्तो वा व्यथितो वापि कश्चन ॥ १५

कश्चिन्नरो वा नारी वा नाश्रीमान्नाप्यरूपवान् ।
द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान् ॥ १६

वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः ।
कृतज्ञाश्च वदान्याश्च शूरा विक्रमसंयुताः ॥ १७

दीर्घायुषो नराः सर्वे धर्मं सत्यं च संश्रिताः ।
सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥ १८

क्षत्रं ब्रह्ममुखं चासीद्वैश्याः क्षत्रमनुव्रताः ।
शूद्राः स्वधर्मनिरतास्त्रीन्वर्णानुपचारिणः ॥ १९

सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता ।
यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता ॥ २०

योधानामग्निकल्पानां पेशलानां सुवर्चसाम् ।
संपूर्णा कृतविद्यानां गुहा केसरिणामिव ॥ २१

काम्भोजविषये जातैर्बाह्लीकैश्च हयोत्तमैः ।
वनायुजैर्नदीजैश्च पूर्णा हरिहयोत्तमैः ॥ २२

विन्ध्यपर्वतजैर्मत्तैः पूर्णा हैमवतैरपि ।
मदान्वितैरतिबलैर्मातङ्गैः पर्वतोपमैः ॥ २३

ऐरावतकुलीनैश्च महापद्मकुलैस्तथा ।
अञ्जनादपि निष्पन्नैर्वामनादपि च द्विपैः ॥ २४

भद्रैर्मन्दैर्मृगैश्चैव भद्रमन्दमृगैस्तथा ।
भद्रमन्दैर्भद्रमृगैर्मृगमन्दैश्च सा पुरी ॥ २५

नित्यमत्तैः सदा पूर्णा नागैरचलसन्निभैः ।
सा योजने च द्वे भूयः सत्यनामा प्रकाशते ॥ २६

यस्यां दशरथो राजा वसञ्जगदपालयत् ।
तां पुरीं स महातेजा राजा दशरथो महान् ॥
शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः २७

तां सत्यनामां दृढतोरणार्गलां
गृहैर्विचित्रैरुपशोभितां शिवाम् ।
पुरीमयोध्यां नृसहस्रसंकुलां
शशास वै शक्रसमो महीपतिः ॥ २८

इति षष्ठः सर्गः ॥

## ॥ सप्तमः सर्गः ॥

तस्यामात्या गुणैरासन्निक्ष्वाकोस्तु महात्मनः ।
मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः ॥ १

अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः ।
शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥ २

धृष्टिर्जयन्तो विजयः सिद्धार्थो ह्यर्थसाधकः ।
अशोको मन्त्रपालश्च सुमन्त्रश्चाष्टमोऽभवत् ॥ ३

ऋत्विजौ द्वावभिमतौ तस्यास्तामृषिसत्तमौ ।
वसिष्ठो वामदेवश्च मन्त्रिणश्च तथापरे ॥ ४

विद्याविनीता ह्रीमन्तः कुशला नियतेन्द्रियाः ।
परस्परानुरक्ताश्च नीतिमन्तो बहुश्रुताः ॥ ५

श्रीमन्तश्च महात्मानः शास्त्रज्ञा दृढविक्रमाः ।
कीर्तिमन्तः प्रणिहिता यथावचनकारिणः ॥ ६

तेजःक्षमायशःप्राप्ताः स्मितपूर्वाभिभाषिणः ।
क्रोधात्कामार्थहेतोर्वा न ब्रूयुरनृतं वचः ॥ ७

तेषामविदितं किंचित्स्वेषु नास्ति परेषु वा ।
क्रियमाणं कृतं वापि चारेणापि चिकीर्षितम् ॥ ८

कुशला व्यवहारेषु सौहृदेषु परीक्षिताः ।
प्राप्तकालं तु ते दण्डं धारयेयुः सुतेष्वपि ॥ ९

कोशसंग्रहणे युक्ता बलस्य च परिग्रहे ।
अहितं वापि पुरुषं न विहिंस्युरदूषकम् ॥ १०

वीराश्च नियतोत्साहा राजशास्त्रमनुव्रताः ।
शुचीनां रक्षितारश्च नित्यं विषयवासिनाम् ॥ ११

ब्रह्मक्षत्रमहिंसन्तस्ते कोशं समवर्धयन् ।
सुतीक्ष्णदण्डा संप्रेक्ष्य पुरुषस्य बलाबलम् ॥ १२

शुचीनामेकबुद्धीनां सर्वेषां संप्रजानताम् ।
नासीत्पुरे वा राष्ट्रे वा मृषावादी नरः क्वचित् ॥ १३

कश्चिन्न दुष्टस्तत्रासीत्परदाररतो नरः ।
प्रशान्तं सर्वमेवासीद्राष्ट्रं पुरवरं च तत् ॥ १४

सुवाससः सुवेषाश्च ते च सर्वे सुशीलिनः ।
हितार्थं च नरेन्द्रस्य जाग्रतो नयचक्षुषा ॥ १५

गुरौ गुणगृहीताश्च प्रख्याताश्च पराक्रमे ।
विदेशेष्वपि विख्याताः सर्वतो बुद्धिनिश्चयात् ॥ १६

संधिविग्रहतत्त्वज्ञाः प्रकृत्या संपदान्विताः ।
मन्त्रसंवरणे युक्ताः श्लक्ष्णाः सूक्ष्मासु बुद्धिषु ॥ १७

नीतिशास्त्रविशेषज्ञाः सततं प्रियवादिनः ।
ईदृशैस्तैरमात्यैश्च राजा दशरथोऽनघः ॥ १८

उपपन्नो गुणोपेतैरन्वशासद्वसुंधराम् ।
अवेक्षमाणश्चारेण प्रजा धर्मेण रञ्जयन् ॥ १९

प्रजानां पालनं कुर्वन्नधर्मं परिवर्जयन् ।
विश्रुतस्त्रिषु लोकेषु वदान्यः सत्यसङ्गरः ॥ २०

स तत्र पुरुषव्याघ्रः शशास पृथिवीमिमाम् ।
नाध्यगच्छद्विशिष्टं वा तुल्यं वा शत्रुमात्मनः ॥ २१

मित्रवान्नतसामन्तः प्रतापहतकण्टकः ।
स शशास जगद्राजा दिवं देवपतिर्यथा ॥ २२

तैर्मन्त्रिभिर्मन्त्रहिते नियुक्तै-
र्वृतोऽनुरक्तैः कुशलैः समर्थैः ।

स पार्थिवो दीप्तिमवाप युक्त-
स्तेजोमयैर्गोभिरिवोदितोऽर्कः ॥ २३

इति सप्तमः सर्गः ॥

## ॥ अष्टमः सर्गः ॥

तस्य त्वेवंप्रभावस्य धर्मज्ञस्य महात्मनः ।
सुतार्थं तप्यमानस्य नासीद्वंशकरः सुतः ॥ १

चिन्तयानस्य तस्येयं बुद्धिरासीन्महात्मनः ।
सुतार्थी वाजिमेधेन किमर्थं न यजाम्यहम् ॥ २

स निश्चितां मतिं कृत्वा यष्टव्यमिति बुद्धिमान् ।
मन्त्रिभिः सह धर्मात्मा सर्वैरेव कृतात्मभिः ॥ ३

ततोऽब्रवीत्स तं राजा सुमन्त्रं मन्त्रिसत्तमम् ।
शीघ्रमानय मे सर्वान् गुरूंस्तान् सपुरोहितान् ॥ ४

ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ।
समानयत्स तान् सर्वान् गुरूंस्तान्वेदपारगान् ॥ ५

सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् ।
पुरोहितं वसिष्ठं च ये चान्ये द्विजसत्तमाः ॥ ६

तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा ।
इदं धर्मार्थसहितं श्लक्ष्णं वचनमब्रवीत् ॥ ७

मम लालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ।
तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ॥ ८

तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा ।
कथं प्राप्स्याम्यहं कामं बुद्धिरत्र विचार्यताम् ॥ ९

ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ।
वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखेरितम् ॥ १०

ऊचुश्च परमप्रीताः सर्वे दशरथं वच ।
संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ११

सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ।
सर्वथा प्राप्स्यसे पुत्रानभिप्रेतांश्च पार्थिव ॥ १२

यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता ।
ततः प्रीतोऽभवद्राजा श्रुत्वैतद्द्विजभाषितम् ॥ १३

अमात्यांश्चाब्रवीद्राजा हर्षपर्याकुलेक्षणः ।
संभाराः संभ्रियन्तां मे गुरूणां वचनादिह ॥ १४

समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम् ।
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ॥ १५

शान्तयश्चाभिवर्धन्तां यथाकल्पं यथाविधि ।
शक्यः कर्तुमयं यज्ञः सर्वेणापि महीक्षिता ॥ १६

नापराधो भवेत्कष्टो यद्यस्मिन् क्रतुसत्तमे ।
छिद्रं हि मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसाः ॥ १७

विहतस्य च यज्ञस्य सद्यः कर्ता विनश्यति ।
तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते ॥ १८

यथा विधानं क्रियतां समर्थाः करणेष्विह ।
तथेति चाब्रुवन् सर्वे मन्त्रिणः प्रत्यपूजयन् ॥ १९

पार्थिवेन्द्रस्य तद्वाक्यं यथाज्ञप्तं निशम्य ते ।
तथा द्विजास्ते धर्मज्ञा वर्धयन्तो नृपोत्तमम् ॥ २०

अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम् ।
विसर्जयित्वा तान् विप्रान् सचिवानिदमब्रवीत् ॥ २१

ऋत्विग्भिरुपदिष्टोऽयं यथावत्क्रतुराप्यताम् ।
इत्युक्त्वा नृपशार्दूलः सचिवान् समुपस्थितान् ॥ २२

विसर्जयित्वा स्वं वेश्म प्रविवेश महाद्युतिः ।
ततः स गत्वा ताः पत्नीर्नरेन्द्रो हृदयप्रियाः ॥ २३

उवाच दीक्षां विशत यक्ष्येऽहं सुतकारणात् ।
तासां तेनातिकान्तेन वचनेन सुवर्चसाम् ॥
मुखपद्मान्यशोभन्त पद्मनीव हिमात्यये ॥ २४

इति अष्टमः सर्गः ॥

## ॥ नवमः सर्गः ॥

एतच्छ्रुत्वा रहः सूतो राजानमिदमब्रवीत् ।
ऋत्विग्भिरुपदिष्टोऽयं पुरावृत्तो मया श्रुतः ॥ १

सनत्कुमारो भगवान् पूर्वं कथितवान् कथाम् ।
ऋषीणां सन्निधौ राजंस्तव पुत्रागमं प्रति ॥ २

काश्यपस्य तु पुत्रोऽस्ति विभण्डक इति श्रुतः ।
ऋश्यशृङ्ग इति ख्यातस्तस्य पुत्रो भविष्यति ॥ ३

स वने नित्यसंवृद्धो मुनिर्वनचरः सदा ।
नान्यं जानाति विप्रेन्द्रो नित्यं पित्रनुवर्तनात् ॥ ४

द्वैविध्यं ब्रह्मचर्यस्य भविष्यति महात्मनः ।
लोकेषु प्रथितं राजन् विप्रैश्च कथितं सदा ॥ ५

तस्यैवं वर्तमानस्य कालः समभिवर्तते ।
अग्निं शुश्रूषमाणस्य पितरं च यशस्विनम् ॥ ६

एतस्मिन्नेव काले तु रोमपादः प्रतापवान् ।
अङ्गेषु प्रथितो राजा भविष्यति महाबलः ॥ ७

तस्य व्यतिक्रमाद्राज्ञो भविष्यति सुदारुणा ।
अनावृष्टिः सुघोरा वै सर्वभूतभयावहा ॥ ८

अनावृष्ट्यां तु वृत्तायां राजा दुःखसमन्वितः ।
ब्राह्मणान् श्रुतवृद्धांश्च समानीय प्रवक्ष्यति ॥ ९

भवन्तः श्रुतधर्माणो लोकचारित्रवेदिनः ।
समादिशन्तु नियमं प्रायश्चित्तं यथा भवेत् ॥ १०

वक्ष्यन्ति ते महीपालं ब्राह्मणा वेदपारगाः ।
विभण्डकसुतं राजन् सर्वोपायैरिहानय ॥ ११

आनीय च महीपाल ऋश्यशृङ्गं सुसत्कृतम् ।
प्रयच्छ कन्यां शान्तां वै विधिना सुसमाहितः ॥ १२

तेषां तु वचनं श्रुत्वा राजा चिन्तां प्रपत्स्यते ।
केनोपायेन वै शक्य इहानेतुं स वीर्यवान् ॥ १३

ततो राजा विनिश्चित्य सह मन्त्रिभिरात्मवान् ।
पुरोहितममात्यांश्च ततः प्रेष्यति सत्कृतान् ॥ १४

ते तु राज्ञो वचः श्रुत्वा व्यथिता विनताननाः ।
न गच्छेयुर्ऋषेर्भीता अनुनेष्यन्ति तं नृपम् ॥ १५

वक्ष्यन्ति चिन्तयित्वा ते तस्योपायांश्च तत्क्षमान् ।
आनेष्यामो वयं विप्रं न च दोषो भविष्यति ॥ १६

एवमङ्गाधिपेनैव गणिकाभिर्ऋषेः सुतः ।
आनीतोऽवर्षयद्देवः शान्ता चास्मै प्रदीयते ॥ १७

ऋश्यशृङ्गस्तु जामाता पुत्रांस्तव विधास्यति ।
सनत्कुमारकथितमेतावद्व्याहृतं मया ॥ १८

अथ हृष्टो दशरथः सुमन्त्रं प्रत्यभाषत ।
यथर्श्यशृङ्गस्त्वानीतो विस्तरेण त्वयोच्यताम् ॥ १९

इति नवमः सर्गः ॥

## ॥ दशमः सर्गः ॥

सुमन्त्रश्चोदितो राज्ञा प्रोवाचेदं वचस्तदा ।
यथर्श्यशृङ्गस्त्वानीतः शृणु मे मन्त्रिभिः सह ॥ १

रोमपादमुवाचेदं सहामात्यः पुरोहितः ।
उपायो निरपायोऽयमस्माभिरभिमन्त्रितः ॥ २

ऋश्यशृङ्गो वनचरस्तपःस्वाध्यायने रतः ।
अनभिज्ञः स नारीणां विषयाणां सुखस्य च ॥ ३

इन्द्रियार्थैरभिमतैर्नरचित्तप्रमाथिभिः ।
पुरमानाययिष्यामः क्षिप्रं चाध्यवसीयताम् ॥ ४

गणिकास्तत्र गच्छन्तु रूपवत्यः स्वलंकृताः ।
प्रलोभ्य विविधोपायैरानेष्यन्तीह सत्कृताः ॥ ५

श्रुत्वा तथेति राजा च प्रत्युवाच पुरोहितम् ।
पुरोहितो मन्त्रिणश्च तथा चक्रुश्च ते तदा ॥ ६

वारमुख्यास्तु तच्छ्रुत्वा वनं प्रविविशुर्महत् ।
आश्रमस्याविदूरेऽस्मिन् यत्नं कुर्वन्ति दर्शने ॥ ७

ऋषिपुत्रस्य धीरस्य नित्यमाश्रमासिनः ।
पितुः स नित्यसन्तुष्टो नास्तिचक्राम चाश्रमात् ॥ ८

न तेन जन्मप्रभृति दृष्टपूर्वं तपस्विना ।
स्त्री वा पुमान्वा यच्चान्यत्सत्त्वं नगरराष्ट्रजम् ॥ ९

ततः कदाचित्तं देशमाजगाम यदृच्छया ।
विभण्डकसुतस्तत्र ताश्चापश्यद्वराङ्गनाः ॥ १०

ताश्चित्रवेषाः प्रमदा गायन्त्यो मधुरस्वरैः ।
ऋषिपुत्रमुपागम्य सर्वा वचनमब्रुवन् ॥ ११

कस्त्वं किं वर्तसे ब्रह्मन् ज्ञातुमिच्छामहे वयम् ।
एकस्त्वं विजने घोरे वने चरसि शंस नः ॥ १२

अदृष्टरूपास्तास्तेन काम्यरूपा वने स्त्रियः ।
हार्दात्तस्य मतिर्जाता ह्याख्यातुं पितरं स्वकम् ॥ १३

पिता विभण्डकोऽस्माकं तस्याहं सुत औरसः ।
ऋश्यशृङ्ग इति ख्यातं नाम कर्म च मे भुवि ॥ १४

इहाश्रमपदेऽस्माकं समीपे शुभदर्शनाः ।
करिष्ये वोऽत्र पूजां वै सर्वेषां विधिपूर्वकम् ॥ १५

ऋषिपुत्रवचः श्रुत्वा सर्वासां मतिरास वै ।
तदाश्रमपदं द्रष्टुं जग्मुः सर्वाश्च तेन ताः ॥ १६

आगतानां ततः पूजामृषिपुत्रश्चकार ह ।
इदमर्घ्यमिदं पाद्यमिदं मूलमिदं फलम् ॥ १७

प्रतिगृह्य तु तां पूजां सर्वा एव समुत्सुकाः ।
ऋषेर्भीतास्तु शीघ्रं ता गमनाय मतिं ददुः ॥ १८

अस्माकमपि मुख्यानि फलानीमानि वै द्विज ।
गृहाण प्रति भद्रं ते भक्षयस्व च मा चिरम् ॥ १९

ततस्तास्तं समालिङ्ग्य सर्वा हर्षसमन्विताः ।
मोदकान् प्रददुस्तस्मै भक्ष्यांश्च विविधाञ्शुभान् ॥ २०

तानि चास्वाद्य तेजस्वी फलानीति स्म मन्यते ।
अनास्वादितपूर्वाणि वने नित्यनिवासिनाम् ॥ २१

आपृच्छ्य च तदा विप्रं व्रतचर्यां निवेद्य च ।
गच्छन्ति स्मापदेशात्ताः भीतास्तस्य पितुः स्त्रियः ॥ २२

गतासु तासु सर्वासु काश्यपस्यात्मजो द्विजः ।
अस्वस्थहृदयश्चासीद्दुःखात्संपरिवर्तते ॥ २३

ततोऽपरेद्युस्तं देशमाजगाम स वीर्यवान् ।
मनोज्ञा यत्र ता दृष्टा वारमुख्याः स्वलंकृताः ॥ २४

दृष्ट्वैव च तदा विप्रमायान्तं हृष्टमानसाः ।
उपसृत्य ततः सर्वास्तास्तमूचुरिदं वचः ॥ २५

एह्याश्रमपदं सौम्य ह्यस्माकमिति चाब्रुवन् ।
तत्राप्येष विधिः श्रीमान् विशेषेण भविष्यति ॥ २६

श्रुत्वा तु वचनं तासां मुनिस्तद्धृदयंगमम् ।
गमनाय मतिं चक्रे तं च निन्युस्तदा स्त्रियः ॥ २७

तत्र चानीयमाने तु विप्रे तस्मिन् महात्मनि ।
ववर्ष सहसा देवो जगत्प्रह्लादयंस्तदा ॥ २८

वर्षेणैवागतं विप्रं विषयं स्वं नराधिपः ।
प्रत्युद्गम्य मुनिं प्रीतः शिरसा च महीं गतः ॥ २९

अर्घ्यं च प्रददौ तस्मै नियतः सुसमाहितः ।
वव्रे प्रसादं विप्रेन्द्रान्मा विप्रं मन्युराविशेत् ॥ ३०

अन्तःपुरं प्रविश्यास्मै कन्यां दत्त्वा यथाविधि ।
शान्तां शान्तेन मनसा राजा हर्षमवाप सः ॥ ३१

एवं स न्यवसत्तत्र सर्वकामैः सुपूजितः ।
ऋश्यशृङ्गो महातेजाः शान्तया सह भार्यया ॥ ३२

इति दशमः सर्गः ॥

---

## ॥ एकादशः सर्गः ॥

---

भूय एव हि राजेन्द्र शृणु मे वचनं हितम् ।
यथा स देवप्रवरः कथायामेवमब्रवीत् ॥ १

इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः ।
राजा दशरथो नाम श्रीमान् सत्यप्रतिश्रवः ॥ २

अङ्गराजेन सख्यं च तस्य राज्ञो भविष्यति ।
पुत्रस्तु सोऽङ्गराजस्य रोमपाद इति श्रुतः ॥ ३

तं स राजा दशरथो गमिष्यति महायशाः ।
अनपत्योऽस्मि धर्मात्मन् शान्ताभर्ता मम क्रतुम् ॥ ४

आहरेत त्वयाज्ञप्तः सन्तानार्थं कुलस्य च ।
श्रुत्वा राज्ञोऽथ तद्वाक्यं मनसापि विमृश्य च ॥ ५

प्रदास्यते पुत्रवन्तं शान्ताभर्तारमात्मवान् ।
प्रतिगृह्य च तं विप्रं स राजा विगतज्वरः ॥ ६

आहरिष्यति तं यज्ञं प्रहृष्टेनान्तरात्मना ।
तं च राजा दशरथो यष्टुकामः कृताञ्जलिः ॥ ७

ऋश्यशृङ्गं द्विजश्रेष्ठं वरयिष्यति धर्मवित् ।
यज्ञार्थं प्रसवार्थं च स्वर्गार्थं च नरेश्वरः ॥ ८

लभते च स तं कामं द्विजमुख्याद्विशांपतिः ।
पुत्राश्चास्य भविष्यन्ति चत्वारोऽमितविक्रमाः ॥ ९

वंशप्रतिष्ठानकराः सर्वलोकेषु विश्रुताः ।
एवं च देवप्रवरः पूर्वं कथितवान् कथाम् ॥ १०

सनत्कुमारो भगवान् पुरा देवयुगे प्रभुः ।
स त्वं पुरुषशार्दूल तमानय सुसत्कृतम् ॥ ११

स्वयमेव महाराज गत्वा सबलवाहनः ।
अनुमान्य वसिष्ठं च सूतवाक्यं निशम्य च ॥ १२

वसिष्ठेनाभ्यनुज्ञातो राजा संपूर्णमानसः ।
सान्तःपुरः सहामात्यः प्रययौ यत्र स द्विजः ॥ १३

वनानि सरितश्चैव व्यतिक्रम्य शनैः शनैः ।
अभिचक्राम तं देशं यत्र वै मुनिपुंगवः ॥ १४

आसाद्य तं द्विजश्रेष्ठं रोमपादसमीपगम् ।
ऋषिपुत्रं ददर्शादौ दीप्यमानमिवानलम् ॥ १५

ततो राजा यथान्यायं पूजां चक्रे विशेषतः ।
सखित्वात्तस्य वै राज्ञः प्रहृष्टेनान्तरात्मना ॥ १६

रोमपादेन चाख्यातमृषिपुत्राय धीमते ।
सख्यं संबन्धकं चैव तदा तं प्रत्यपूजयत् ॥ १७

एवं सुसत्कृतस्तेन सहोषित्वा नरर्षभः ।
सप्ताष्ट दिवसान् राजा राजानमिदमब्रवीत् ॥ १८

शान्ता तव सुता राजन् सह भर्त्रा विशांपते ।
मदीयं नगरं यातु कार्यं हि महदुद्यतम् ॥ १९

तथेति राजा संश्रुत्य गमनं तस्य धीमतः ।
उवाच वचनं विप्रं गच्छ त्वं सह भार्यया ॥ २०

ऋषिपुत्रः प्रतिश्रुत्य तथेत्याह नृपं तदा ।
स नृपेणाभ्यनुज्ञातः प्रययौ सह भार्यया ॥ २१

तावन्योन्याञ्जलिं कृत्वा स्नेहात्संश्लिष्य चोरसा ।
ननन्दतुर्दशरथो रोमपादश्च वीर्यवान् ॥ २२

ततः सुहृदमापृच्छय प्रस्थितो रघुनन्दनः ।
पौरेभ्यः प्रेषयामास दूतान्वै शीघ्रगामिनः ॥ २३

क्रियतां नगरं सर्वं क्षिप्रमेव स्वलंकृतम् ।
धूपितं सिक्तसंमृष्टं पताकाभिरलंकृतम् ॥ २४

ततः प्रहृष्टाः पौरास्ते श्रुत्वा राजानमागतम् ।
तथा प्रचक्रुस्तत्सर्वं राज्ञा यत्प्रेषितं तदा ॥ २५

ततः स्वलंकृतं राजा नगरं प्रविवेश ह ।
शङ्खदुन्दुभिनिर्घोषैः पुरस्कृत्य द्विजर्षभम् ॥ २६

ततः प्रमुदिताः सर्वे दृष्ट्वा तं नागरा द्विजम् ।
प्रवेश्यमानं सत्कृत्य नरेन्द्रेणेन्द्रकर्मणा ॥ २७

अन्तःपुरं प्रवेश्यैनं पूजां कृत्वा च शास्त्रतः ।
कृतकृत्यं तदात्मानं मेने तस्योपवाहनात् । २८

अन्तःपुराणि सर्वाणि शान्तां दृष्ट्वा तथागताम् ।
सह भर्त्रा विशालाक्षीं प्रीत्यानन्दमुपागमन् ॥ २९

पूज्यमाना च ताभिः सा राज्ञा चैव विशेषतः ।
उवास तत्र सुखिता कंचित्कालं सहर्त्विजा ॥ ३०

इति एकादशः सर्गः ॥

## ॥ द्वादशः सर्गः ॥

ततः काले बहुतिथे कस्मिंश्चित्सुमनोहरे ।
वसन्ते समनुप्राप्ते राज्ञो यष्टुं मनोऽभवत् ॥ १

ततः प्रसाद्य शिरसा तं विप्रं देववर्णिनम् ।
यज्ञाय वरयामास सन्तानार्थं कुलस्य च ॥ २

तथेति च राजानमुवाच च सुसत्कृतः ।
संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ३

ततो राजाब्रवीद्वाक्यं सुमन्त्रं मन्त्रिसत्तमम् ।
सुमन्त्रावाहय क्षिप्रमृत्विजो ब्रह्मवादिनः ॥ ४

सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् ।
पुरोहितं वसिष्ठं च ये चान्ये द्विजसत्तमाः ॥ ५

ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ।
समानयत्स तान् विप्रान् समस्तान्वेदपारगान् ॥ ६

तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा ।
धर्मार्थसहितं युक्तं श्लक्ष्णं वचनमब्रवीत् ॥ ७

मम लालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ।
तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ॥ ८

तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा ।
ऋषिपुत्रप्रभावेण कामान् प्राप्स्यामि चाप्यहम् ॥ ९

ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजन् ।
वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखाच्च्युतम् ॥ १०

ऋश्यशृङ्गपुरोगाश्च प्रत्यूचुर्नृपतिं तदा ।
संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ११

सर्वथा प्राप्स्यसे पुत्रांश्चतुरोऽमितविक्रमान् ।
यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता ॥ १२

ततः प्रीतोऽभवद्राजा श्रुत्वा तु द्विजभाषितम् ।
अमात्यांश्चाब्रवीद्राजा हर्षेणेदं शुभाक्षरम् ॥ १३

संभाराः संभ्रियन्तां मे गुरूणां वचनादिह ।
समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम् ॥ १४

सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ।
शान्तयश्चापि वर्तन्तां यथाकल्पं यथाविधि ॥ १५

शक्यः कर्तुमयं यज्ञः सर्वेणापि महीक्षिता ।
नापराधो भवेत्कष्टो यद्यस्मिन् क्रतुसत्तमे ॥ १६

छिद्रं हि मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसाः ।
विहतस्य हि यज्ञस्य सद्यः कर्ता विनश्यति ॥ १७

तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते ।
तथा विधानं क्रियतां समर्थाः करणेष्विह ॥ १८

तथेति च ततः सर्वे मन्त्रिणः प्रत्यपूजयन् ।
पार्थिवेन्द्रस्य तद्वाक्यं यथाज्ञप्तमकुर्वत ॥ १९

ततो द्विजास्ते धर्मज्ञमस्तुवन् पार्थिवर्षभम् ।
अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम् ॥ २०

गतेष्वथ द्विजाग्र्येषु मन्त्रिणस्तान्नराधिपः ।
विसर्जयित्वा स्वं वेश्म प्रविवेश महाद्युतिः ॥ २१

इति द्वादशः सर्गः ॥

# ॥ त्रयोदशः सर्गः ॥

—:o:—

पुनः प्राप्ते वसन्ते तु पूर्णः संवत्सरोऽभवत् ।
प्रसवार्थं गतो यष्टुं हयमेधेन वीर्यवान् ॥ १

अभिवाद्य वसिष्ठं च न्यायतः प्रतिपूज्य च ।
अब्रवीत्प्रश्रितं वाक्यं प्रसवार्थं द्विजोत्तमम् ॥ २

यज्ञो मे प्रीयतां ब्रह्मन्यथोक्तं मुनिपुंगव ।
यथा न विघ्नः क्रियते यज्ञाङ्गेषु विधीयताम् ॥ ३

भवान् स्निग्धः सुहृन्मह्यं गुरुश्च परमो महान् ।
वोढव्यो भवता चैव भारो यज्ञस्य चोद्यतः ॥ ४

तथेति च राजानमब्रवीद्द्विजसत्तमः ।
करिष्ये सर्वमेवैतद्भवता यत्समर्थितम् ॥ ५

ततोऽब्रवीद्द्विजान् वृद्धान्यज्ञकर्मसु निष्ठितान् ।
स्थापत्ये निष्ठितांश्चैव वृद्धान् परमधार्मिकान् ॥ ६

कर्मान्तिकान् शिल्पकरान्वर्धकीन् खनकानपि ।
गणकान् शिल्पिनश्चैव तथैव नटनर्तकान् ॥ ७

तथा शुचीन् शास्त्रविदः पुरुषान् सुबहुश्रुतान् ।
यज्ञकर्म समीहन्तां भवन्तो राजशासनात् ॥ ८

इष्टका बहुसाहस्राः शीघ्रमानीयतामिति ।
औपकार्याः क्रियन्तां च राज्ञां बहुगुणान्विताः ॥ ९

ब्राह्मणावसथाश्चैव कर्तव्याः शतशः शुभाः ।
भक्ष्यान्नपानैर्बहुभिः समुपेताः सुनिष्ठिताः ॥ १०

तथा पौरजनस्यापि कर्तव्या बहुविस्तराः ।
आवासा बहुभक्ष्या वै सर्वकामैरुपस्थिताः ॥ ११

तथा जानपदस्यापि जनस्य बहुशोभनम् ।
दातव्यमन्नं विधिवत्सत्कृत्य न तु लीलया । १२

सर्वे वर्णा यथा पूजां प्राप्नुवन्ति सुसत्कृताः ।
न चावज्ञा प्रयोक्तव्या कामक्रोधवशादपि ॥ १३

यज्ञकर्मसु ये व्यग्राः पुरुषाः शिल्पिनस्तथा ।
तेषामपि विशेषेण पूजा कार्या यथाक्रमम् ॥ १४

ते च स्युः संभृताः सर्वे वसुभिर्भोजनेन च ।
यथा सर्वं सुविहितं न किंचित्परिहीयते ॥ १५

तथा भवन्तः कुर्वन्तु प्रीतिस्निग्धेन चेतसा ।
ततः सर्वे समागम्य वसिष्ठमिदमब्रुवन् ॥ १६

यथोक्तं तत्सुविहितं न किंचित्परिहीयते ।
ततः सुमन्त्रमाहूय वसिष्ठो वाक्यमब्रवीत ॥ १७

निमन्त्रयस्व नृपतीन् पृथिव्यां ये च धार्मिकाः ।
ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्चैव सहस्रशः ॥ १८

समानयस्व सत्कृत्य सर्वदेशेषु मानवान् ।
मिथिलाधिपतिं शूरं जनकं सत्यविक्रमम् ॥ १९

निष्ठितं सर्वशास्त्रेषु तथा वेदेषु निष्ठितम् ।
तमानय महाभागं स्वयमेव सुसत्कृतम् ॥ २०

पूर्वसंबन्धिनं ज्ञात्वा ततः पूर्वं ब्रवीमि ते ।
तथा काशीपतिं स्निग्धं सततं प्रियवादिनम् ॥ २१

सद्वृत्तं देवसंकाशं स्वयमेवानयस्व ह ।
तथा केकयराजानं वृद्धं परमधार्मिकम् ॥ २२

श्वशुरं राजसिंहस्य सपुत्रं त्वमिहानय ।
अङ्गेश्वरं महाभागं रोमपादं सुसत्कृतम् ॥ २३

वयस्यं राजसिंहस्य समानय यशस्विनम् ।
प्राचीनान् सिन्धुसौवीरान् सौराष्ट्रेयांश्च पार्थिवान् ॥ २४

दाक्षिणात्यान्नरेन्द्रांश्च समस्तानायस्व ह ।
सन्ति स्निग्धाश्च ये चान्ये राजानः पृथिवीतले ॥ २५

तानानय ततः क्षिप्रं सानुगान् सहबान्धवान् ।
वसिष्ठवाक्यं तच्छ्रुत्वा सुमन्त्रस्त्वरितस्तदा ॥ २६

व्यादिशत्पुरुषास्तत्र राज्ञामानयने शुभान् ।
स्वयमेव हि धर्मात्मा प्रययौ मुनिशासनात् ॥ २७

सुमन्त्रस्त्वरितो भूत्वा समानेतुं महीक्षितः ।
ते च कर्मान्तिकाः सर्वे वसिष्ठाय च धीमते ॥ २८

सर्वं निवेदयन्ति स्म यज्ञे यदुपकल्पितम् ।
ततः प्रीतो द्विजश्रेष्ठस्तान् सर्वानिदमब्रवीत् ॥ २९

अवज्ञया न दातव्यं कस्यचिल्लीलयापि वा ।
अवज्ञया कृतं हन्याद्दातारं नात्र संशयः ॥ ३०

ततः कैश्चिदहोरात्रैरुपयाता महीक्षितः ।
बहूनि रत्नान्यादाय राज्ञो दशरथस्य हि ॥ ३१

ततो वसिष्ठः सुप्रीतो राजानमिदमब्रवीत् ।
उपयाता नरव्याघ्र राजानस्तव शासनात् ॥ ३२

मया च सत्कृताः सर्वे यथार्हं राजसत्तमाः ।
यज्ञीयं च कृतं राजन् पुरुषैः समाहितैः ॥ ३३

निर्यातु च भवान्यष्टुं यज्ञायतनमन्तिकात् ।
सर्वकामैरुपहृतैरुपेतं वै समन्ततः ॥ ३४

द्रष्टुमर्हसि राजेन्द्र मनसेव विनिर्मितम् ।
तथा वसिष्ठवचनादृश्यशृङ्गस्य चोभयोः ॥ ३५

शुभे दिवसनक्षत्रे निर्यातो जगतीपतिः ।
ततो वसिष्ठप्रमुखाः सर्व एव द्विजोत्तमाः ॥ ३६

ऋश्यशृङ्गं पुरस्कृत्य यज्ञकर्मारभंस्तदा ।
यज्ञवाटगताः सर्वे यथाशास्त्रं यथाविधि ॥ ३७

इति त्रयोदशः सर्गः ॥

## ॥ चतुर्दशः सर्गः ॥

अथ संवत्सरे पूर्णे तस्मिन् प्राप्ते तुरंगमे ।
सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत ॥ १

ऋश्यशृङ्गं पुरस्कृत्य कर्म चक्रुर्द्विजर्षभाः ।
अश्वमेधे महायज्ञे राज्ञोऽस्य सुमहात्मनः ॥ २

कर्म कुर्वन्ति विधिवद्याजका वेदपारगाः ।
यथाविधि यथान्यायं परिक्रामन्ति शास्त्रतः ॥ ३

प्रवर्ग्यं शास्त्रतः कृत्वा तथैवोपसदं द्विजाः ।
चक्रुश्च विधिवत्सर्वमधिकं कर्म शास्त्रतः ॥ ४

अभिपूज्य ततो हृष्टाः सर्वे चक्रुर्यथाविधि ।
प्रातःसवनपूर्वाणि कर्माणि मुनिपुंगवाः ॥ ५

ऐन्द्रश्च विधिवद्दत्तो राजा चाभिष्टुतोऽनघः ।
माध्यंदिनं च सवनं प्रावर्तत यथाक्रमम् ॥ ६

तृतीयसवनं चैव राज्ञोऽस्य सुमहात्मनः ।
चक्रुस्ते शास्त्रतो दृष्ट्वा कर्माणि मुनिपुङ्गवाः ॥ ७

न चाहुतमभूत्तत्र स्खलितं वापि किंचन ।
दृश्यते ब्रह्मवत्सर्वं क्षेमयुक्तं हि चक्रिरे ॥ ८

न तेष्वहःसु श्रान्तो वा क्षुधितो वापि दृश्यते ।
नाविद्वान्ब्राह्मणस्तत्र नाशतानुचरस्तथा ॥ ९

ब्राह्मणा भुञ्जते नित्यं नाथवन्तश्च भुञ्जते ।
तापसा भुञ्जते चापि श्रमणा भुञ्जते तथा ॥ १०

वृद्धाश्च व्याधिताश्चैव स्त्रियो बालास्तथैव च ।
अनिशं भुञ्जमानानां न तृप्तिरुपलभ्यते ॥ ११

दीयतां दीयतामन्नं वासांसि विविधानि च ।
इति संचोदितास्तत्र तथा चक्रुरनेकशः ॥ १२

अन्नकूटाश्च बहवो दृश्यन्ते पर्वतोपमाः ।
दिवसे दिवसे तत्र सिद्धस्य विधिवत्तदा ॥ १३

नानादेशादनुप्राप्ताः पुरुषाः स्त्रीगणास्तथा ।
अन्नपानैः सुविहितास्तस्मिन्यज्ञे महात्मनः ॥ १४

अन्नं हि विधिवत्स्वादु प्रशंसन्ति द्विजर्षभाः ।
अहो तृप्ताः स्म भद्रं ते इति शुश्राव राघवः ॥ १५

स्वलंकृताश्च पुरुषा ब्राह्मणान्पर्यवेषयन् ।
उपासते च तानन्ये सुमृष्टमणिकुण्डलाः ॥ १६

कर्मान्तरे तदा विप्रा हेतुवादान् बहूनपि ।
प्राहुश्च वाग्मिनो धीराः परस्परजिगीषया ॥ १७

दिवसे दिवसे तत्र संस्तरे कुशला द्विजाः ।
सर्वकर्माणि चक्रुस्ते यथाशास्त्रं प्रचोदिताः । १८

नाषडङ्गविदत्रासीन्नाव्रतो नाबहुश्रुतः ।
सदस्यस्तस्य वै राज्ञो नावेदकुशलो द्विजः ॥ १९

प्राप्ते यूपोच्छ्रये तस्मिन्षड् बैल्वाः खादिरास्तथा ।
तावन्तो बिल्वसहिताः पर्णिनश्च तथापरे ॥ २०

श्लेष्मातकमयस्त्वेको देवदारुमयस्तथा ।
द्वावेव विहितौ तत्र बाहुव्यस्तपरिग्रहौ ॥ २१

कारिताः सर्व एवैते शास्त्रज्ञैर्यज्ञकोविदैः ।
शोभार्थं तस्य यज्ञस्य काञ्चनालंकृताऽभवन् ॥ २२

एकविंशतियूपास्ते एकविंशत्यरत्नयः ।
वासोभिरेकविंशद्भिरेकैकं समलंकृताः ॥ २३

विन्यस्ता विधिवत्सर्वे शिल्पिभिः सुकृता दृढाः ।
अष्टाश्रयः सर्व एव श्लक्ष्णरूपसमन्विताः ॥ २४

आच्छादितास्ते वासोभिः पुष्पैर्गन्धैश्च भूषिताः ।
सप्तर्षयो दीप्तिमन्तो विराजन्ते यथा दिवि ॥ २५

इष्टकाश्च यथान्यायं कारिताश्च प्रमाणतः ।
चितोऽग्निर्ब्राह्मणैस्तत्र कुशलैः शुल्बकर्मणि ॥ २६

स चित्यो राजसिंहस्य संचितः कुशलैर्द्विजैः ।
गरुडो रुक्मपक्षो वै त्रिगुणोऽष्टादशात्मकः ॥ २७

नियुक्तास्तत्र पशवस्तत्तदुद्दिश्य दैवतम् ।
उरगाः पक्षिणश्चैव यथाशास्त्रं प्रचोदिताः ॥ २८

शामित्रे तु हयस्तत्र तथा जलचराश्च ये ।
ऋत्विग्भिः सर्वमेवैतन्नियुक्तं शास्त्रतस्तदा ॥ २९

पशूनां त्रिशतं तत्र यूपेषु नियतं तथा ।
अश्वरत्नोत्तमं तस्य राज्ञो दशरथस्य च ॥ ३०

कौसल्या तं हयं तत्र परिचर्य समन्ततः ।
कृपाणैर्विशशासैनं त्रिभिः परमया मुदा ॥ ३१

पतत्रिणा तदा सार्धं सुस्थितेन च चेतसा ।
अवसद्रजनीमेकां कौसल्या धर्मकाम्यया ॥ ३२

होताध्वर्युस्तथोद्गाता हयेन समयोजयन् ।
महिष्या परिवृत्या च वावातां च तथापराम् ॥ ३३

पतत्रिणस्तस्य वपामुद्धृत्य नियतेन्द्रियः ।
ऋत्विक्परमसंपन्नः श्रपयामास शास्त्रतः ॥ ३४

धूमगन्धं वपायास्तु जिघ्रति स्म नराधिपः ।
यथाकालं यथान्यायं निर्णुदन्पापमात्मनः ॥ ३५

हयस्य यानि चाङ्गानि तानि सर्वाणि ब्राह्मणाः ।
अग्नौ प्रास्यन्ति विधिवत्समन्त्राः षोडशर्त्विजः ॥ ३६

प्लक्षशाखासु यज्ञानामन्येषां क्रियते हविः ।
अश्वमेधस्य चैकस्य वैतसो भाग इष्यते ॥ ३७

त्र्यहोऽश्वमेधः संख्यातः कल्पसूत्रेण ब्राह्मणैः ।
चतुष्टोममहस्तस्य प्रथमं परिकल्पितम् ॥ ३८

उक्थ्यं द्वितीयं संख्यातमतिरात्रं तथोत्तरम् ।
कारितास्तत्र बहवो विहिताः शास्त्रदर्शनात् ॥ ३९

ज्योतिष्टोमायुषी चैवमतिरात्रौ च निर्मितौ ।
अभिजिद्विश्वजिच्चैवमप्तोर्यामो महाक्रतुः ॥ ४०

प्राचीं होत्रे ददौ राजा दिशं स्वकुलवर्धनः ।
अध्वर्यवे प्रतीचीं तु ब्रह्मणे दक्षिणां दिशम् ॥ ४१

उद्गात्रे च तथोदीचीं दक्षिणैषा विनिर्मिता ।
अश्वमेधे महायज्ञे स्वयंभुविहिते पुरा ॥ ४२

क्रतुं समाप्य तु तदा न्यायतः पुरुषर्षभः ।
ऋत्विग्भ्यो हि ददौ राजा धरां तां कुलवर्धनः ॥ ४३

ऋत्विजस्त्वब्रुवन्सर्वे राजानं गतकल्मषम् ।
भवानेव महीं कृत्स्नामेको रक्षितुमर्हति ॥ ४४

न भूम्या कार्यमस्माकं न हि शक्ताः स्म पालने ।
रताः स्वाध्यायकरणे वयं नित्यं हि भूमिप ॥ ४५

निष्क्रयं किंचिदेवेह प्रयच्छतु भवानिति ।
मणिरत्नं सुवर्णं वा गावो यद्वा समुद्यतम् ॥ ४६

तत्प्रयच्छ नरश्रेष्ठ धरण्या न प्रयोजनम् ।
एवमुक्तो नरपतिर्ब्राह्मणैर्वेदपारगैः ॥ ४७

गवां शतसहस्राणि दश तेभ्यो ददौ नृपः ।
दशकोटीः सुवर्णस्य रजतस्य चतुर्गुणम् ॥ ४८

ऋत्विजस्तु ततः सर्वे प्रददुः सहिता वसु ।
ऋश्यशृङ्गाय मुनये वसिष्ठाय च धीमते ॥ ४९

ततस्ते न्यायतः कृत्वा प्रविभागं द्विजोत्तमाः ।
सुप्रीतमनसः सर्वे प्रत्यूचुर्मुदिता भृशम् ॥ ५०

ततः प्रसर्पकेभ्यस्तु हिरण्यं सुसमाहितः ।
जाम्बूनदं कोटिशतं ब्राह्मणेभ्यो ददौ तदा ॥ ५१

दरिद्राय द्विजायाथ हस्ताभरणमुत्तमम् ।
कस्मैचिद्याचमानाय ददौ राघवनन्दनः ॥ ५२

ततः प्रीतेषु नृपतिर्द्विजेषु द्विजवत्सलः ।
प्रणाममकरोत्तेषां हर्षपर्याकुलेक्षणः ॥ ५३

तस्याशिषोऽथ विविधा ब्राह्मणैः समुदीरिताः ।
उदारस्य नृवीरस्य धरण्यां प्रणतस्य च ॥ ५४

ततः प्रीतमना राजा प्राप्य यज्ञमनुत्तमम् ।
पापापहं स्वर्नयनं दुस्तरं पार्थिवर्षभैः ॥ ५५

ततोऽब्रवीदृष्यशृङ्गं राजा दशरथस्तदा ।
कुलस्य वर्धनं त्वं तु कर्तुमर्हसि सुव्रत ॥ ५६

तथेति च स राजानमुवाच द्विजसत्तमः ।
भविष्यन्ति सुता राजंश्चत्वारस्ते कुलोद्वहाः ॥ ५७

इति चतुर्दशः सर्गः ॥

## ॥ पञ्चदशः सर्गः ॥

मेधावी तु ततो ध्यात्वा स किंचिदिदमुत्तरम् ।
लब्धसंज्ञस्ततस्तं तु वेदज्ञो नृपमब्रवीत् ॥ १

इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात् ।
अथर्वशिरसि प्रोक्तैर्मन्त्रैः सिद्धां विधानतः ॥ २

ततः प्रक्रम्य तामिष्टिं पुत्रीयां पुत्रकारणात् ।
जुहाव चाग्नौ तेजस्वी मन्त्रदृष्टेन कर्मणा ॥ ३

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
भागप्रतिग्रहार्थं वै समवेता यथाविधि ॥ ४

ताः समेत्य यथान्यायं तस्मिन्सदसि देवताः ।
अब्रुवल्लोककर्तारं ब्रह्माणं वचनं महत् ॥ ५

भगवंस्त्वत्प्रसादेन रावणो नाम राक्षसः ।
सर्वान्नो बाधते वीर्याच्छासितुं तं न शक्नुमः ॥ ६

त्वया तस्मै वरो दत्तः प्रीतेन भगवन्पुरा ।
मानयन्तश्च तं नित्यं सर्वं तस्य क्षमामहे ॥ ७

उद्वेजयति लोकांस्त्रीनुच्छ्रितान्द्वेष्टि दुर्मतिः ।
शक्रं त्रिदशराजानं प्रधर्षयितुमिच्छति ॥ ८

ऋषीन्यक्षान्सगन्धर्वानसुरान्ब्राह्मणांस्तथा ।
अतिक्रामति दुर्धर्षो वरदानेन मोहितः ॥ ९

नैनं सूर्यः प्रतपति पार्श्वे वाति न मारुतः ।
चलोर्मिमाली तं दृष्ट्वा समुद्रोऽपि न कम्पते ॥ १०

सुमहन्नो भयं तस्माद्राक्षसाद्घोरदर्शनात् ।
वधार्थं तस्य भगवन्नुपायं कर्तुमर्हसि ॥ ११

एवमुक्तः सुरैः सर्वैश्चिन्तयित्वा ततोऽब्रवीत् ।
हन्तायं विहितस्तस्य वधोपायो दुरात्मनः ॥ १२

तेन गन्धर्वयक्षाणां देवदानवरक्षसाम् ।
अवध्योऽस्मीति वागुक्ता तथेत्युक्तं च तन्मया ॥ १३

नाकीर्तयदवज्ञानात्तद्रक्षो मानुषांस्तदा ।
तस्मात्स मानुषाद्वध्यो मृत्युर्नान्योऽस्य विद्यते ॥ १४

एतच्छ्रुत्वा प्रियं वाक्यं ब्रह्मणा समुदाहृतम् ।
देवा महर्षयः सर्वे प्रहृष्टास्तेऽभवंस्तदा ॥ १५

एतस्मिन्नन्तरे विष्णुरुपायातो महाद्युतिः ।
शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः ॥ १६

ब्रह्मणा च समागम्य तत्र तस्थौ समाहितः ।
तमब्रुवन्सुराः सर्वे समभिष्टूय संनताः ॥ १७

त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया ।
राज्ञो दशरथस्य त्वमयोध्याधिपतेः प्रभोः ॥ १८

धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः ।
तस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च ॥ १९

विष्णो पुत्रत्वमागच्छ कृत्वात्मानं चतुर्विधम् ।
तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् ॥ २०

अवध्यं दैवतैर्विष्णो समरे जहि रावणम् ।
स हि देवान्सगन्धर्वान्सिद्धांश्च मुनिसत्तमान् । २१

राक्षसो रावणो मूर्खो वीर्योत्सेकेन बाधते ।
ऋषयस्तु ततस्तेन गन्धर्वाप्सरसस्तथा ॥ २२

क्रीडन्तो नन्दनवने क्रूरेण किल हिंसिताः ।
वधार्थं वयमायातास्तस्य वै मुनिभिः सह ॥ २३

सिद्धगन्धर्वयक्षाश्च ततस्त्वां शरणं गताः ।
त्वं गतिः परमा देव सर्वेषां नः परंतप ॥ २४

वधाय देवशत्रूणां नृणां लोके मनः कुरुः ।
एवमुक्तस्तु देवेशो विष्णुस्त्रिदशपुङ्गवः ॥ २५

पितामहपुरोगांस्तान्सर्वलोकनमस्कृतः ।
अब्रवीत्त्रिदशान्सर्वान्समेतान्धर्मसंहितान् ॥ २६

भयं त्यजत भद्रं वो हितार्थं युधि रावणम् ।
सपुत्रपौत्रं सामात्यं समित्रज्ञातिबान्धवम् ॥ २७

हत्वा क्रूरं दुरात्मानं देवर्षीणां भयावहम् ।
दश वर्ष सहस्राणि दश वर्ष शतानि च ॥ २८

वत्स्यामि मानुषे लोके पालयन्पृथिवीमिमाम् ।
एवं दत्वा वरं देवो देवानां विष्णुरात्मवान् ।
मानुषे चिन्तयामास जन्मभूमिमथात्मनः ॥ २९

ततः पद्मपलाशाक्षः कृत्वात्मानं चतुर्विधम् ।
पितरं रोचयामास तदा दशरथं नृपम् ॥ ३०

ततो देवर्षिगन्धर्वाः सरुद्राः साप्सरोगणाः ।
स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनम् ॥ ३१

तमुद्धतं रावणमुग्रतेजसं
प्रवृद्धदर्पं त्रिदशेश्वरद्विषम् ।
विरावणं साधुतपस्विकण्टकं
तपस्विनामुद्धर तं भयावहम् ॥ ३२

तमेव हत्वा सबलं सबान्धवं
विरावणं रावणमुग्रपौरुषम् ।
स्वर्लोकमागच्छ गतज्वरश्चिरं
सुरेन्द्रगुप्तं गतदोषकल्मषम् ॥ ३३

इति पञ्चदशः सर्गः ॥

## ॥ षोडशः सर्गः ॥

ततो नारायणो देवो नियुक्तः सुरसत्तमैः ।
जानन्नपि सुरानेवं श्लक्ष्णं वचनमब्रवीत् ॥ १

उपायः को वधे तस्य राक्षसाधिपतेः सुराः ।
यमहं तं समास्थाय निहन्यामृषिकण्टकम् ॥ २

एवमुक्ताः सुराः सर्वे प्रत्यूचुर्विष्णुमव्ययम् ।
मानुषीं तनुमास्थाय रावणं जहि संयुगे ॥ ३

स हि तेपे तपस्तीव्रं दीर्घकालमरिन्दम ।
येन तुष्टोऽभवद्ब्रह्मा लोककृल्लोकपूजितः ॥ ४

संतुष्टः प्रददौ तस्मै राक्षसाय वरं प्रभुः ।
नानाविधेभ्यो भूतेभ्यो भयं नान्यत्र मानुषात् ॥ ५

अवज्ञाताः पुरा तेन वरदानेन मानवाः ।
एवं पितामहात्तस्माद्वरं प्राप्य स दर्पितः ॥ ६

उत्सादयति लोकांस्त्रीन्स्त्रियश्चाप्यपकर्षति ।
तस्मात्तस्य वधो दृष्टो मानुषेभ्यः परंतप ॥ ७

इत्येतद्वचनं श्रुत्वा सुराणां विष्णुरात्मवान् ।
पितरं रोचयामास तदा दशरथं नृपम् ॥ ८

स चाप्यपुत्रो नृपतिस्तस्मिन्काले महाद्युतिः ।
अयजत्पुत्रियामिष्टिं पुत्रेप्सुररिसूदनः ॥ ९

स कृत्वा निश्चयं विष्णुरामन्त्र्य च पितामहम् ।
अन्तर्धानं गतो देवैः पूज्यमानो महर्षिभिः ॥ १०

ततो वै यजमानस्य पावकादतुलप्रभम् ।
प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ॥ ११

कृष्णं रक्ताम्बरधरं रक्तास्यं दुन्दुभिस्वनम् ।
स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्धजम् ॥ १२

शुभलक्षणसंपन्नं दिव्याभरभूषितम् ।
शैलशृङ्गसमुत्सेधं दृप्तशार्दूलविक्रमम् ॥ १३

दिवाकरसमाकारं दीप्तानलशिखोपमम् ।
तप्तजाम्बूनदमयीं राजतान्तपरिच्छदाम् ॥ १४

दिव्यपायससंपूर्णां पात्रीं पत्नीमिव प्रियाम् ।
प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव ॥ १५

समवेक्ष्याब्रवीद्वाक्यमिदं दशरथं नृपम् ।
प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप ॥ १६

ततः परं तदा राजा प्रत्युवाच कृताञ्जलिः ।
भगवन्स्वागतं तेऽस्तु किमहं करवाणि ते ॥ १७

अथो पुनरिदं वाक्यं प्राजापत्यो नरोऽब्रवीत् ।
राजन्नर्चयता देवानद्य प्राप्तमिदं त्वया ॥ १८

इदं तु नृपशार्दूल पायसं देवनिर्मितम् ।
प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्धनम् ॥ १९

भार्याणामनुरूपाणामश्नीतेति प्रयच्छ वै ।
तासु त्वं लप्स्यसे पुत्रान्यदर्थं यजसे नृप ॥ २०

तथेति नृपतिः प्रीतः शिरसा प्रतिगृह्य ताम् ।
पात्रीं देवान्नसंपूर्णां देवदत्तां हिरण्मयीम् ॥ २१

अभिवाद्य च तद्भूतमद्भुतं प्रियदर्शनम् ।
मुदा परमया युक्तश्चकाराभिप्रदक्षिणम् ॥ २२

ततो दशरथः प्राप्य पायसं देवनिर्मितम् ।
बभूव परमप्रीतः प्राप्य वित्तमिवाधनः ॥ २३

ततस्तदद्भुतप्रख्यं भूतं परमभास्वरम् ।
संवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत ॥ २४

हर्षरश्मिभिरुद्द्योतं तस्यान्तःपुरमाबभौ ।
शारदस्याभिरामस्य चन्द्रस्येव नभोंऽशुभिः ॥ २५

सोऽन्तःपुरं प्रविश्यैव कौसल्यामिदमब्रवीत् ।
पायसं प्रतिगृह्णीष्व पुत्रीयमिदमात्मनः ॥ २६

कौसल्यायै नरपतिः पायसार्धं ददौ तदा ।
अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ॥ २७

कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् ।
प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ॥ २८

अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः ।
एवं तासां ददौ राजा भार्याणां पायसं पृथक् ॥ २९

तास्त्वेतत्पायसं प्राप्य नरेन्द्रस्योत्तमाः स्त्रियः ।
संमानं मेनिरे सर्वाः प्रहर्षोदितचेतसः ॥ ३०

ततस्तु ताः प्राश्य तदुत्तमस्त्रियो
महीपतेरुत्तमपायसं पृथक् ।

हुताशनादित्यसमानतेजस-
श्चिरेण गर्भान्प्रतिपेदिरे तदा ॥ ३१

ततस्तु राजा प्रसमीक्ष्य ताः स्त्रियः
प्ररूढगर्भाः प्रतिलब्धमानसः ।
बभूव हृष्टस्त्रिदिवे यथा हरिः
सुरेन्द्रसिद्धर्षिगणाभिपूजितः ॥ ३२

इति षोडशः सर्गः ॥

—: o :—

## ॥ सप्तदशः सर्गः ॥

पुत्रत्वं तु गते विष्णौ राज्ञस्तस्य महात्मनः ।
उवाच देवताः सर्वाः स्वयंभूर्भगवानिदम् ॥ १

सत्यसन्धस्य वीरस्य सर्वेषां नो हितैषिणः ।
विष्णोः सहायान्बलिनः सृजध्वं कामरूपिणः ॥ २

मायाविदश्च शूरांश्च वायुवेगसमाञ्जवे ।
नयज्ञान्बुद्धिसंपन्नान्विष्णुतुल्यपराक्रमान् ॥ ३

असंहार्यानुपायज्ञान्सिंहसंहननान्वितान् ।
सर्वास्त्रगुणसंपन्नानमृतप्राशनानिव ॥ ४

अप्सरःसु च मुख्यासु गन्धर्वीणां तनूषु च ।
किंनरीणां च गात्रेषु वानरीणां तनूषु च ॥ ५

यक्षपन्नगकन्यासु ऋक्षविद्याधरीषु च ।
सृजध्वं हरिरूपेण पुत्रांस्तुल्यपराक्रमान् ॥ ६

पूर्वमेव मया सृष्टो जाम्बवानृक्षपुङ्गवः ।
जृम्भमाणस्य सहसा मम वक्त्रादजायत ॥ ७

ते तथोक्ता भगवता तत्प्रतिश्रुत्य शासनम् ।
जनयामासुरेवं ते पुत्रान्वानररूपिणः ॥ ८

ऋषयश्च महात्मानः सिद्धविद्याधरोरगाः ।
चारणाश्च सुतान्वीरान्ससृजुर्वनचारिणः ॥ ९

वानरेन्द्रं महेन्द्राभमिन्द्रो वालिमूर्जितम् ।
सुग्रीवं जनयामास तपनस्तपतां वरः ॥ १०

बृहस्पतिस्त्वजनयत्तारं नाम महाहरिम् ।
सर्ववानरमुख्याणां बुद्धिमन्तमनुत्तमम् ॥ ११

धनदस्य सुतः श्रीमान्वानरो गन्धमादनः ।
विश्वकर्मा त्वजनयन्नलं नाम महाहरिम् ॥ १२

पावकस्य सुतः श्रीमान्नीलोऽग्निसदृशप्रभः ।
तेजसा यशसावीर्यादत्यरिच्यत वानरान् ॥ १३

रूपद्रवणसंपन्नावश्विनौ रूपसंमतौ ।
मैन्दं च द्विविदं चैव जनयामासतुः स्वयम् ॥ १४

वरुणो जनयामास सुषेणं नाम वानरम् ।
शरभं जनयामास पर्जन्यस्तु महाबलम् ॥ १५

मारुतस्यात्मजः श्रीमान्हनुमान्नाम वानरः ।
वज्रसंहननोपेतो वैनतेयसमो जवे ॥ १६

सर्ववानरमुख्येषु बुद्धिमान्बलवानपि ।
ते सृष्टा बहुसाहस्रा दशग्रीववधे रताः ॥ १७

अप्रमेयबला वीरा विक्रान्ताः कामरूपिणः ।
ते गजाचलसङ्काशा वपुष्मन्तो महाबलाः ॥ १८

ऋक्षवानरगोपुच्छाः क्षिप्रमेवाभिजज्ञिरे ।
यस्य देवस्य यद्रूपं वेषो यश्च पराक्रमः ॥ १९

अजायत समस्तेन तस्य तस्य सुतः पृथक् ।
गोलाङ्गुलीषु चोत्पन्नाः केचित्संमतविक्रमाः ॥ २०

ऋक्षीषु च तथा जाता वानराः किंनरीषु च ।
देवा महर्षिगन्धर्वास्तार्क्ष्या यक्षा यशस्विनः ॥ २१

नागाः किंपुरुषाश्चैव सिद्धविद्याधरोरगाः ।
बहवो जनयामासुर्हृष्टास्तत्र सहस्रशः ॥ २२

वानरान्सुमहाकायान्सर्वान्वै वनचारिणः ।
सिंहशार्दूलसदृशा दर्पेण च बलेन च ॥ २३

शिलाप्रहरणाः सर्वे सर्वे पादपयोधिनः ।
नखदंष्ट्रायुधाः सर्वे सर्वे सर्वास्त्रकोविदाः ॥ २४

विचालयेयुः शैलेन्द्रान्भेदयेयुः स्थिरान्द्रुमान् ।
क्षोभयेयुश्च वेगेन समुद्रं सरितां पतिम् ॥ २५

दारयेयुः क्षितिं पद्भ्यामाप्लवेयुर्महार्णवम् ।
नभःस्थलं विशेयुश्च गृह्णीयुरपि तोयदान् ॥ २६

गृह्णीयुरपि मातङ्गान्मत्तान्प्रव्रजतो वने ।
नर्दमानाश्च नादेन पातयेयुर्विहङ्गमान् ॥ २७

ईदृशानां प्रसूतानि हरीणां कामरूपिणाम् ।
शतं शतसहस्राणि यूथपानां महात्मनाम् ॥ २८

ते प्रधानेषु यूथेषु हरीणां हरियूथपाः ।
बभूवुर्यूथपश्रेष्ठा वीरांश्चाजनयन्हरीन् ॥ २९

अन्ये ऋक्षवतः प्रस्थानुपतस्थुः सहस्रशः ।
अन्ये नानाविधाञ्शैलान्भेजिरे काननानि च ॥ ३०

सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च बालिनम् ।
भ्रातरावुपतस्थुस्ते सर्व एव हरीश्वराः ॥ ३१

नलं नीलं हनूमन्तमन्यांश्च हरियूथपान् ।
ते तार्क्ष्यबलसंपन्नाः सर्वे युद्धविशारदाः ॥ ३२

विचरन्तोऽर्दयन्दर्पात्सिंहव्याघ्रमहोरगान् ।
तांश्च सर्वान्महाबाहुर्वाली विपुलविक्रमः ॥ ३३

जुगोप भुजवीर्येण ऋक्षगोपुच्छवानरान् ।
तैरियं पृथिवी शूरैः सपर्वतवनार्णवा ।
कीर्णा विविधसंस्थानैर्नानाव्यञ्जनलक्षणैः ॥ ३४

तैर्मेघवृन्दाचलकूटकल्पै-
र्महाबलैर्वानरयूथपालैः ।
बभूव भूर्भीमशरीररूपैः
समावृता रामसहायहेतोः ॥ ३५

इति सप्तदशः सर्गः ॥

## ॥ अष्टादशः सर्गः ॥

निर्वृत्ते तु क्रतौ तस्मिन्हयमेधे महात्मनः ।
प्रतिगृह्य सुरा भागान्प्रतिजग्मुर्यथागतम् ॥ १

समाप्तदीक्षानियमः पत्नीगणसमन्वितः ।
प्रविवेश पुरीं राजा सभृत्यबलवाहनः ॥ २

यथार्हं पूजितास्तेन राज्ञा वै पृथिवीश्वराः ।
मुदिताः प्रययुर्देशान्प्रणम्य मुनिपुङ्गवम् ॥ ३

श्रीमतां गच्छतां तेषां स्वपुराणि पुरात्ततः ।
बलानि राज्ञां शुभ्राणि प्रहृष्टानि चकाशिरे ॥ ४

गतेषु पृथिवीशेषु राजा दशरथस्तदा ।
प्रविवेश पुरीं श्रीमान्पुरस्कृत्य द्विजोत्तमान् ॥ ५

शान्तया प्रययौ सार्धमृश्यशृङ्गः सुपूजितः ।
अन्वीयमानो राज्ञाथ सानुयात्रेण धीमता ॥ ६

एवं विसृज्य तान्सर्वान्राजा संपूर्णमानसः ।
उवास सुखितस्तत्र पुत्रोत्पत्तिं विचिन्तयन् ॥ ७

ततो यज्ञे समाप्ते तु ऋतूनां षट् समत्ययुः ।
ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ॥ ८

नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ।
ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ॥ ९

प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ।
कौसल्याजनयद्रामं दिव्यलक्षणसंयुतम् ॥ १०

विष्णोरर्धं महाभागं पुत्रमैक्ष्वाकवर्धनम् ।
कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ॥ ११

यथा वरेण देवानामदितिर्वज्रपाणिना ।
भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः ॥ १२

साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः ।
अथ लक्ष्मणशत्रुघ्नौ सुमित्राजनयत्सुतौ ॥ १३

सर्वास्त्रकुशलौ वीरौ विष्णोरर्धसमन्वितौ ।
पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः ॥ १४

सार्पे जातौ च सौमित्री कुलीरेऽभ्युदिते रवौ ।
राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक् ॥ १५

गुणवन्तोऽनुरूपाश्च रुच्या प्रोष्ठपदोपमाः ।
जगुः कलं च गन्धर्वा ननृतुश्चाप्सरोगणाः ॥ १६

देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता ।
उत्सवश्च महानासीदयोध्यायां जनाकुलः ॥ १७

रथ्याश्च जनसंबाधा नटनर्तकसंकुलाः ।
गायनैश्च विराविण्यो वादकैश्च तथापरैः ॥ १८

प्रदेयांश्च ददौ राजा सूतमागधवन्दिनाम् ।
ब्राह्मणेभ्यो ददौ वित्तं गोधनानि सहस्रशः ॥ १९

अतीत्यैकादशाहं तु नामकर्म तथाकरोत् ।
ज्येष्ठं रामं महात्मानं भरतं कैकयीसुतम् ॥ २०

सौमित्रिं लक्ष्मणमिति शत्रुघ्नमपरं तथा ।
वसिष्ठः परमप्रीतो नामानि कृतवांस्तदा ॥ २१

ब्राह्मणान्भोजयामास पौराञ्जानपदानपि ।
अददद्ब्राह्मणानां च रत्नौघममितं बहु ॥ २२

तेषां जन्मक्रियादीनि सर्वकर्माण्यकारयत् ।
तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः ॥ २३

स्वयंभूरिव भूतानां बभूव गुणवत्तरः ।
सर्वे वेदविदः शूराः सर्वे लोकहिते रताः ॥ २४

सर्वे ज्ञानोपसंपन्नाः सर्वे समुदिता गुणैः ।
तेषामपि महातेजा रामः सत्यपराक्रमः ॥ २५

इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः ।
गजस्कन्धेऽश्वपृष्ठे च रथचर्यासु संमतः ॥ २६

धनुर्वेदे च निरतः पितृशुश्रूषणे रतः ।
बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः ॥ २७

रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ।
सर्वप्रियकरस्तस्य रामस्यापि शरीरतः ॥ २८

लक्ष्मणो लक्ष्मिसंपन्नो बहिःप्राण इवापरः ।
न च तेन विना निद्रां लभते पुरुषोत्तमः ॥ २९

मृष्टमन्नमुपानीतमश्नाति न हि तं विना ।
यदा हि हयमारूढो मृगयां याति राघवः ॥ ३०

तदैनं पृष्ठतोऽभ्येति सधनुः परिपालयन् ।
भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हि सः ॥ ३१

प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः ।
स चतुर्भिर्महाभागैः पुत्रैर्दशरथः प्रियैः ॥ ३२

बभूव परमप्रीतो वेदैरिव पितामहः ।
ते यदा ज्ञानसंपन्नाः सर्वे समुदिता गुणैः ॥ ३३

ह्रीमन्तः कीर्तिमन्तश्च सर्वज्ञा दीर्घदर्शिनः ।
तेषामेवंप्रभावाणां सर्वेषां दीप्ततेजसाम् ॥ ३४

पिता दशरथो हृष्टो ब्रह्मा लोकाधिपो यथा ।
ते चापि मनुजव्याघ्रा वैदिकाध्ययने रताः ॥ ३५

पितृशुश्रूषणरता धनुर्वेदे च निष्ठिताः ।
अथ राजा दशरथस्तेषां दारक्रियां प्रति ॥ ३६

चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः ।
तस्य चिन्तयमानस्य मन्त्रिमध्ये महात्मनः ॥ ३७

अभ्यागच्छन्महातेजा विश्वामित्रो महामुनिः ।
स राज्ञो दर्शनाकाङ्क्षी द्वाराध्यक्षानुवाच ह ॥ ३८

शीघ्रमाख्यात मां प्राप्तं कौशिकं गाधिनः सुतम् ।
तच्छ्रुत्वा वचनं त्रासाद्राज्ञो वेश्म प्रदुद्रुवुः ॥ ३९

संभ्रान्तमनसः सर्वे तेन वाक्येन चोदिताः ।
ते गत्वा राजभवनं विश्वामित्रमृषिं तदा ॥ ४०

प्राप्तमावेदयामासुर्नृपायैक्ष्वाकवे तदा ।
तेषां तद्वचनं श्रुत्वा सपुरोधाः समाहितः ॥ ४१

प्रत्युज्जगाम तं हृष्टो ब्रह्माणमिव वासवः ।
स दृष्ट्वा ज्वलितं दीप्त्या तापसं संशितव्रतम् ॥ ४२

प्रहृष्टवदनो राजा ततोऽर्घ्यं समुपाहरत् ।
स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्मणा ॥ ४३

कुशलं चाव्ययं चैव पर्यपृच्छन्नराधिपम् ।
पुरे कोशे जनपदे बान्धवेषु सुहृत्सु च ॥ ४४

कुशलं कौशिको राज्ञः पर्यपृच्छत्सुधार्मिकः ।
अपि ते सन्नताः सर्वे सामन्ता रिपवो जिताः ॥ ४५

दैवं च मानुषं चापि कर्म ते साध्वनुष्ठितम् ।
वसिष्ठं च समागम्य कुशलं मुनिपुङ्गवः ॥ ४६

ऋषींश्चान्यान्यथान्यायं महाभागानुवाच ह ।
ते सर्वे हृष्टमनसस्तस्य राज्ञो निवेशनम् ॥ ४७

विविशुः पूजितास्तत्र निषेदुश्च यथार्हतः ।
अथ हृष्टमना राजा विश्वामित्रं महामुनिम् ॥ ४८

उवाच परमोदारो हृष्टस्तमभिपूजयन् ।
यथामृतस्य संप्राप्तिर्यथा वर्षमनूदके ॥ ४९

यथा सदृशदारेषु पुत्रजन्माप्रजस्य च ।
प्रणष्टस्य यथा लाभो यथा हर्षो महोदये ॥ ५०

तथैवागमनं मन्ये स्वागतं ते महामुने ।
कं च ते परमं कामं करोमि किमु हर्षितः ॥ ५१

पात्रभूतोऽसि मे ब्रह्मन्दिष्ट्या प्राप्तोऽसि धार्मिक ।
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥ ५२

पूर्वं राजर्षिशब्देन तपसा द्योतितप्रभः ।
ब्रह्मर्षित्वमनुप्राप्तः पूज्योऽसि बहुधा मया ॥ ५३

तदद्भुतमिदं ब्रह्मन्पवित्रं परमं मम ।
शुभक्षेत्रगतश्चाहं तव संदर्शनात्प्रभो ॥ ५४

ब्रूहि यत्प्रार्थितं तुभ्यं कार्यमागमनं प्रति ।
इच्छाम्यनुगृहीतोऽहं त्वदर्थपरिवृद्धये ॥ ५५

कार्यस्य न विमर्शं च गन्तुमर्हसि कौशिक ।
कर्ता चाहमशेषेण दैवतं हि भवान्मम ॥ ५६

मम चायमनुप्राप्तो महानभ्युदयो द्विज ।
तवागमनजः कृत्स्नो धर्मश्चानुत्तमो मम ॥ ५७

इति हृदयसुखं निशम्य वाक्यं
श्रुतिसुखमात्मवता विनीतमुक्तम् ।
प्रथितगुणयशा गुणैर्विशिष्टः
परमऋषिः परमं जगाम हर्षम् ॥ ५८

इति अष्टादशः सर्गः ॥

## ॥ एकोनविंशः सर्गः ॥

---

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् ।
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ १

सदृशं राजशार्दूल तवैतद्भुवि नान्यथा ।
महावंशप्रसूतस्य वसिष्ठव्यपदेशिनः ॥ २

यत्तु मे हृद्गतं वाक्यं तस्य कार्यस्य निश्चयम् ।
कुरुष्व राजशार्दूल भव सत्यप्रतिश्रवः ॥ ३

अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ ।
तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ ॥ ४

व्रते मे बहुशश्चीर्णे समाप्त्यां राक्षसाविमौ ।
तौ मांसरुधिरौघेण वेदिं तामभ्यवर्षताम् ॥ ५

अवधूते तथाभूते तस्मिन्नियमनिश्चये ।
कृतश्रमो निरुत्साहस्तस्माद्देशादपक्रमे ॥ ६

न च मे क्रोधमुत्स्रष्टुं बुद्धिर्भवति पार्थिव ।
तथाभूता हि सा चर्या न शापस्तत्र मुच्यते ॥ ७

स्वपुत्रं राजशार्दूल रामं सत्यपराक्रमम् ।
काकपक्षधरं शूरं ज्येष्ठं मे दातुमर्हसि ॥ ८

शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ।
राक्षसा ये विकर्तारस्तेषामपि विनाशने ॥ ९

श्रेयश्चास्मै प्रदास्यामि बहुरूपं न संशयः ।
त्रयाणामपि लोकानां येन ख्यातिं गमिष्यति ॥ १०

न च तौ राममासाद्य शक्तौ स्थातुं कथञ्चन ।
न च तौ राघवादन्यो हन्तुमुत्सहते पुमान् ॥ ११

वीर्योत्सिक्तौ हि तौ पापौ कालपाशवशं गतौ ।
रामस्य राजशार्दूल न पर्याप्तौ महात्मनः ॥ १२

न च पुत्रकृतं स्नेहं कर्तुमर्हसि पार्थिव ।
अहं ते प्रतिजानामि हतौ तौ विद्धि राक्षसौ ॥ १३

अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् ।
वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः ॥ १४

यदि ते धर्मलाभं च यशश्च परमं भुवि ।
स्थिरमिच्छसि राजेन्द्र रामं मे दातुमर्हसि ॥ १५

थद्यभ्यनुज्ञां काकुत्स्थ ददते तव मन्त्रिणः ।
वसिष्ठप्रमुखाः सर्वे ततो रामं विसर्जय ॥ १६

अभिप्रेतमसंसक्तमात्मजं दातुमर्हसि ।
दशरात्रं हि यज्ञस्य रामं राजीवलोचनम् ॥ १७

नात्येति कालो यज्ञस्य यथायं मम राघव ।
तथा कुरुष्व भद्रं ते मा च शोके मनः कृथाः ॥ १८

इत्येवमुक्त्वा धर्मात्मा धर्मार्थसहितं वचः ।
विरराम महातेजा विश्वामित्रो महामुनिः ॥ १९

स तन्निशम्य राजेन्द्रो विश्वामित्रवचः शुभम् ।
शोकमभ्यागमत्तीव्रं व्यषीदत भयान्वितः ॥ २०

इति हृदयमनोविदारणं
मुनिवचनं तदतीव शुश्रुवान् ।
नरपतिरगमद्भयं मह-
द्व्यथितमनाः प्रचचाल चासनात् ॥ २१

इति एकोनविंशः सर्गः ॥

## ॥ विंशः सर्गः ॥

तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम् ।
मुहूर्तमिव निःसंज्ञः संज्ञावानिदमब्रवीत् ॥ १

ऊनषोडशवर्षो मे रामो राजीवलोचनः ।
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ २

इयमक्षौहिणी पूर्णा यस्याहं पतिरीश्वरः ।
अनया संवृतो गत्वा योद्धाहं तैर्निशाचरैः ॥ ३

इमे शूराश्च विक्रान्ता भृत्या मेऽस्त्रविशारदाः ।
योग्या रक्षोगणैर्योद्धुं न रामं नेतुमर्हसि ॥ ४

अहमेव धनुष्पाणिर्गोप्ता समरमूर्धनि ।
यावत्प्राणान्धरिष्यामि तावद्योत्स्ये निशाचरैः ॥ ५

निर्विघ्ना व्रतचर्या सा भविष्यति सुरक्षिता ।
अहं तत्रागमिष्यामि न रामं नेतुमर्हसि ॥ ६

बालो ह्यकृतविद्यश्च न च वेत्ति बलाबलम् ।
न चास्त्रबलसंयुक्तो न च युद्धविशारदः ॥ ७

न चासौ रक्षसां योग्यः कूटयुद्धा हि ते ध्रुवम् ।
विप्रयुक्तो हि रामेण मुहूर्तमपि नोत्सहे ॥ ८

जीवितुं मुनिशार्दूल न रामं नेतुमर्हसि ।
यदि वा राघवं ब्रह्मन्नेतुमिच्छसि सुव्रत ॥ ९

चतुरङ्गसमायुक्तं मया च सह तं नय ।
षष्टिर्वर्षसहस्राणि जातस्य मम कौशिक ॥ १०

दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि ।
चतुर्णामात्मजानां हि प्रीतिः परमिका मम ॥ ११

ज्येष्ठं धर्मप्रधानं च न रामं नेतुमर्हसि ।
किंवीर्या राक्षसास्ते च कस्य पुत्राश्च के च ते ॥ १२

कथंप्रमाणाः के चैतान्रक्षन्ति मुनिपुङ्गव ।
कथं च प्रतिकर्तव्यं तेषां रामेण रक्षसाम् ॥ १३

मामकैर्वा बलैर्ब्रह्मन्मया वा कूटयोधिनाम् ।
सर्वं मे शंस भगवन्कथं तेषां मया रणे ॥ १४

स्थातव्यं दुष्टभावानां वीर्योत्सिक्ता हि राक्षसाः ।
तस्य तद्वचनं श्रुत्वा विश्वामित्रोऽभ्यभाषत ॥ १५

पुलस्त्यवंशप्रभवो रावणो नाम राक्षसः ।
स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम् ॥ १६

महाबलो महावीर्यो राक्षसैर्बहुभिर्वृतः ।
श्रूयते हि महावीर्यो रावणो राक्षसाधिपः ॥ १७

साक्षाद्वैश्रवणभ्राता पुत्रो विश्रवसो मुनेः ।
यदा स्वयं न यज्ञस्य विघ्नकर्ता महाबलः ॥ १८

तेन सञ्चोदितौ द्वौ तु राक्षसौ सुमहाबलौ ।
मारीचश्च सुबाहुश्च यज्ञविघ्नं करिष्यतः ॥ १९

इत्युक्तो मुनिना तेन राजोवाच मुनिं तदा ।
न हि शक्तोऽस्मि संग्रामे स्थातुं तस्य दुरात्मनः ॥ २०

स त्वं प्रसादं धर्मज्ञ कुरुष्व मम पुत्रके ।
मम चैवाल्पभाग्यस्य दैवतं हि भवान्गुरुः ॥ २१

देवदानवगन्धर्वा यक्षाः पतगपन्नगाः ।
न शक्ता रावणं सोढुं किं पुनर्मानवा युधि ॥ २२

स हि वीर्यवतां वीर्यमादत्ते युधि राक्षसः ।
तेन चाहं न शक्नोमि संयोद्धुं तस्य वा बलैः ॥ २३

सबलो वा मुनिश्रेष्ठ सहितो वा ममात्मजैः ।
कथमप्यमरप्रख्यं संग्रामाणामकोविदम् ॥ २४

बालं मे तनयंब्रह्मन्नैव दास्यामि पुत्रकम् ।
अथ कालोपमौ युद्धे सुतौ सुन्दोपसुन्दयोः ॥ २५

यज्ञविघ्नकरौ तौ ते नैव दास्यामि पुत्रकम् ।
मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ।
तयोरन्यतरेणाहं योद्धा स्यां ससुहृद्गणः ॥ २६

इति नरपतिजल्पनाद्द्विजेन्द्रं
कुशिकसुतं सुमहान्विवेश मन्युः ।
सुहुत इव मखेऽग्निराज्यसिक्तः
समभवदुज्ज्वलितो महर्षिवह्निः ॥ २७

इति विंशः सर्गः ॥

## एकविंशः सर्गः ॥

तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलाक्षरम् ।
समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ॥ १

पूर्वमर्थं प्रतिश्रुत्य प्रतिज्ञां हातुमिच्छसि ।
राघवाणामयुक्तोऽयं कुलस्यास्य विपर्ययः ॥ २

यदीदं ते क्षमं राजन्गमिष्यामि यथागतम् ।
मिथ्याप्रतिज्ञः काकुत्स्थ सुखी भव सबान्धवः ॥ ३

तस्य रोषपरीतस्य विश्वामित्रस्य धीमतः ।
चचाल वसुधा कृत्स्ना विवेश च भयं सुरान् ॥ ४

त्रस्तरूपं तु विज्ञाय जगत्सर्वं महानृषिः ।
नृपतिं सुव्रतो धीरो वसिष्ठो वाक्यमब्रवीत् ॥ ५

इक्ष्वाकूणां कुले जातः साक्षाद्धर्म इवापरः ।
धृतिमान्सुव्रतः श्रीमान्न धर्मं हातुमर्हसि ॥ ६

त्रिषु लोकेषु विख्यातो धर्मात्मा इति राघव ।
स्वधर्मं प्रतिपद्यस्व नाधर्मं वोढुमर्हसि ॥ ७

संश्रुत्यैवं करिष्यामीत्यकुर्वाणस्य राघव ।
इष्टापूर्तवधो भूयात्तस्माद्रामं विसर्जय ॥ ८

कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः ।
गुप्तं कुशिकपुत्रेण ज्वलनेनामृतं यथा ॥ ९

एष विग्रहवान्धर्म एष वीर्यवतां वरः ।
एष बुद्ध्याधिको लोके तपसश्च परायणम् ॥ १०

एषोऽस्त्रान्विविधान्वेत्ति त्रैलोक्ये सचराचरे ।
नैनमन्यः पुमान्वेत्ति न च वेत्स्यन्ति केचन ॥ ११

न देवा नर्षयः केचिन्नासुरा न च राक्षसाः ।
गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ १२

सर्वास्त्राणि भृशाश्वस्य पुत्रा परमधार्मिकाः ।
कौशिकाय पुरा दत्ता यदा राज्यं प्रशासति ॥ १३

तेऽपि पुत्रा भृशाश्वस्य प्रजापतिसुतासुताः ।
नैकरूपा महावीर्या दीप्तिमन्तो जयावहाः ॥ १४

जया च सुप्रभा चैव दक्षकन्ये सुमध्यमे ।
ते सुवातेऽस्त्रशस्त्राणि शतं परमभास्वरम् ॥ १५

पञ्चाशतं सुताँल्लेभे जया नाम परान्पुरा ।
वधायासुरसैन्यानाममेयान्कामरूपिणः ॥ १६

सुप्रभाजनयच्चापि पुत्रान्पञ्चाशतं पुनः ।
संहारान्नाम दुर्धर्षान्दुराक्रामान्बलीयसः ॥ १७

तानि चास्त्राणि वेत्त्येष यथावत्कुशिकात्मजः ।
अपूर्वाणां च जनने शक्तो भूयश्च धर्मवित् ॥ १८

तेनास्य मुनिमुख्यस्य सर्वज्ञस्य महात्मनः ।
न किञ्चिदप्यविदितं भूतं भव्यं च राघव ॥ १९

एवंवीर्यो महातेजा विश्वामित्रो महातपाः ।
न रामगमने राजन्संशयं गन्तुमर्हसि ॥ २०

तेषां निग्रहणे शक्तः स्वयं च कुशिकात्मजः ।
तव पुत्रहितार्थाय त्वामुपेत्याभियाचते ॥ २१

इति मुनिवचनात्प्रसन्नचित्तो
रघुवृषभश्च मुमोद भास्वराङ्गः ।
गमनमभिरुरोच राघवस्य
प्रथितयशाः कुशिकात्मजाय बुद्ध्या ॥ २२

इति एकविंशः सर्गः ॥

# द्वाविंशः सर्गः ॥

तथा वसिष्ठे ब्रुवति राजा दशरथः सुतम् ।
प्रहृष्टवदनो राममाजुहाव सलक्ष्मणम् ॥ १

कृतस्वस्त्ययनं मात्रा पित्रा दशरथेन च ।
पुरोधसा वसिष्ठेन मङ्गलैरभिमन्त्रितम् ॥ २

स पुत्रं मूर्ध्न्युपाघ्राय राजा दशरथः प्रियम् ।
ददौ कुशिकपुत्राय सुप्रीतेनान्तरात्मना ॥ ३

ततो वायुः सुखस्पर्शो विरजस्को ववौ तदा ।
विश्वामित्रगतं दृष्ट्वा रामं राजीवलोचनम् ॥ ४

पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिःस्वनः ।
शङ्खदुन्दुभिनिर्घोषः प्रयाते तु महात्मनि ॥ ५

विश्वामित्रो ययावग्रे ततो रामो महायशाः ।
काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात् ॥ ६

कलापिनौ धनुष्पाणी शोभयानौ दिशो दश ।
विश्वामित्रं महात्मानं त्रिशीर्षाविव पन्नगौ ॥ ७

तदा कुशिकपुत्रं तु धनुष्पाणी स्वलंकृतौ ।
बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती ॥ ८

कुमारौ चारुवपुषौ भ्रातरौ रामलक्ष्मणौ ।
अनुयातौ श्रिया जुष्टौ शोभयेतामनिन्दितौ ॥ ९

स्थाणुं देवमिवाचिन्त्यं कुमाराविव पावकी ।
अध्यर्धयोजनं गत्वा सरय्वा दक्षिणे तटे ॥ १०

रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ।
गृहाण वत्स सलिलं मा भूत्कालस्य पर्ययः ॥ ११

मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा ।
न श्रमो न ज्वरो वा ते न रूपस्य विपर्ययः ॥ १२

न च सुप्तं प्रमत्तं वा धर्षयिष्यन्ति नैर्ऋताः ।
न बाह्वोः सदृशो वीर्ये पृथिव्यामस्ति कश्चन ॥ १३

त्रिषु लोकेषु वै राम न भवेत्सदृशस्तव ।
न सौभाग्ये न दाक्षिण्ये न ज्ञाने बुद्धिनिश्चये ॥ १४

नोत्तरे प्रतिवक्तव्ये समो लोके तवानघ ।
एतद्विद्याद्वये लब्धे भविता नास्ति ते समः ॥ १५

बला त्वतिबला चैव सर्वज्ञानस्य मातरौ ।
क्षुत्पिपासे न ते राम भविष्येते नरोत्तम ॥ १६

बलामतिबलां चैव पठतः पथि राघव ।
विद्याद्वयमधीयाने यशश्चाप्यतुलं त्वयि ॥ १७

पितामहसुते ह्येते विद्ये तेजः समन्विते ।
प्रदातुं तव काकुत्स्थ सदृशस्त्वं हि धार्मिक ॥ १८

कामं बहुगुणाः सर्वे त्वय्येते नात्र संशयः ।
तपसा संभृते चैते बहुरूपे भविष्यतः ॥ १९

ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः ।
प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः ॥ २०

विद्यासमुदितो रामः शुशुभे भूरिविक्रमः ।
सहस्ररश्मिर्भगवाञ्शरदीव दिवाकरः ॥ २१

गुरुकार्याणि सर्वाणि नियुज्य कुशिकात्मजे ।
ऊषुस्तां रजनीं तीरे सरय्वाः सुसुखं त्रयः ॥ २२

दशरथनृपसूनुसत्तमाभ्यां
तृणशयनेऽनुचिते सहोषिताभ्याम् ।

कुशिकसुतवचोनुलालिताभ्यां
सुखमिव सा विबभौ विभावरी च ॥ २३

इति द्वाविंशः सर्गः ॥

## त्रयोविंशः सर्गः ॥

प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः ।
अभ्यभाषत काकुत्स्थौ शयानौ पर्णसंस्तरे ॥ १

कौसल्यासुप्रजा राम पूर्वा सन्ध्या प्रवर्तते ।
उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥ २

तस्यर्षेः परमोदारं वचः श्रुत्वा नृपात्मजौ ।
स्नात्वा कृतोदकौ वीरौ जेपतुः परमं जपम् ॥ ३

कृताह्निकौ महावीर्यौ विश्वामित्रं तपोधनम् ।
अभिवाद्याभिसंहृष्टौ गमनायोपतस्थतुः ॥ ४

तौ प्रयातौ महावीर्यौ दिव्यां त्रिपथगां नदीम् ।
ददृशाते ततस्तत्र सरय्वाः सङ्गमे शुभे ॥ ५

तत्राश्रमपदं पुण्यमृषीणामुग्रतेजसाम् ।
बहुवर्षसहस्राणि तप्यतां परमं तपः ॥ ६

तं दृष्ट्वा परमप्रीतौ राघवौ पुण्यमाश्रमम् ।
ऊचतुस्तं महात्मानं विश्वामित्रमिदं वचः ॥ ७

कस्यायमाश्रमः पुण्यः को न्वस्मिन्वसते पुमान् ।
भगवञ्श्रोतुमिच्छावः परं कौतूहलं हि नौ ॥ ८

तयोस्तद्वचनं श्रुत्वा प्रहस्य मुनिपुङ्गवः ।
अब्रवीच्छ्रूयतां राम यस्यायं पूर्व आश्रमः ॥ ९

कन्दर्पो मूर्तिमानासीत्काम इत्युच्यते बुधैः ।
तपस्यन्तमिह स्थाणुं नियमेन समाहितम् ॥ १०

कृतोद्वाहं तु देवेशं गच्छन्तं समरुद्गणम् ।
धर्षयामास दुर्मेधा हुंकृतश्च महात्मना ॥ ११

दग्धस्य तस्य रौद्रेण चक्षुषा रघुनन्दन ।
व्यशीर्यन्त शरीरात्स्वात्सर्वगात्राणि दुर्मतेः ॥ १२

तस्य गात्रं हतं तत्र निर्दग्धस्य महात्मना ।
अशरीरः कृतः कामः क्रोधाद्देवेश्वरेण ह ॥ १३

अनङ्ग इति विख्यातस्तदाप्रभृति राघव ।
स चाङ्गविषयः श्रीमान्यत्राङ्गं स मुमोच ह ॥ १४

तस्यायमाश्रमः पुण्यस्तस्येमे मुनयः पुरा ।
शिष्या धर्मपरा नित्यं तेषां पापं न विद्यते ॥ १५

इहाद्य रजनीं राम वसेम शुभदर्शन ।
पुण्ययोः सरितोर्मध्ये श्वस्तरिष्यामहे वयम् ॥ १६

अभिगच्छामहे सर्वे शुचयः पुण्यमाश्रमम् ।
स्नाताश्च कृतजप्याश्च हुतहव्या नरोत्तम ॥ १७

तेषां संवदतां तत्र तपोदीर्घेण चक्षुषा ।
विज्ञाय परमप्रीता मुनयो हर्षमागमन् ॥ १८

अर्घ्यं पाद्यं तथातिथ्यं निवेद्य कुशिकात्मजे ।
रामलक्ष्मणयोः पश्चादकुर्वन्नतिथिक्रियाम् ॥ १९

सत्कारं समनुप्राप्य कथाभिरभिरञ्जयन् ।
यथार्हमजपन्संध्यामृषयस्ते समाहिताः ॥ २०

तत्र वासिभिरानीता मुनिभिः सुव्रतैः सह ।
न्यवसन्सुसुखं तत्र कामाश्रमपदे तदा ॥ २१

कथाभिरभिरामाभिरभिरामौ नृपात्मजौ ।
रमयामास धर्मात्मा कौशिको मुनिपुङ्गवः ॥ २२

इति त्रयोविंशः सर्गः ॥

## चतुर्विंशः सर्गः ॥

ततः प्रभाते विमले कृताह्निकमरिंदमौ ।
विश्वामित्रं पुरस्कृत्य नद्यास्तीरमुपागतौ ॥ १

ते च सर्वे महात्मानो मुनयः संशितव्रताः ।
उपस्थाप्य शुभां नावं विश्वामित्रमथाब्रुवन् ॥ २

आरोहतु भवान्नावं राजपुत्रपुरस्कृतः ।
अरिष्टं गच्छ पन्थानं माभूत्कालस्य पर्ययः ॥ ३

विश्वामित्रस्तथेत्युक्त्वा तानृषीनभिपूज्य च ।
ततार सहितस्ताभ्यां सरितं सागरंगमाम् ॥ ४

ततः शुश्राव तं शब्दमतिसंरम्भवर्धनम् ।
मध्यमागम्य तोयस्य सह रामः कनीयसा ॥ ५

अथ रामः सरिन्मध्ये पप्रच्छ मुनिपुङ्गवम् ।
वारिणो विद्यमानस्य किमयं तुमुलो ध्वनिः ॥ ६

राघवस्य वचः श्रुत्वा कौतूहलसमन्वितम् ।
कथयामास धर्मात्मा तस्य शब्दस्य निश्चयम् ॥ ७

कैलासपर्वते राम मनसा निर्मितं सरः ।
ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः ॥ ८

तस्मात्सुस्राव सरसः सायोध्यामुपगूहते ।
सरःप्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता ॥ ९

तस्यायमतुलः शब्दो जाह्नवीमभिवर्धते ।
वारिसंक्षोभजो राम प्रणामं नियतः कुरु ॥ १०

ताभ्यां तु तावुभौ कृत्वा प्रणाममतिधार्मिकौ ।
तीरं दक्षिणमासाद्य जग्मतुर्लघुविक्रमौ ॥ ११

स वनं घोरसङ्काशं दृष्ट्वा नृपवरात्मजः ।
अविप्रहतमैक्ष्वाकः पप्रच्छ मुनिपुङ्गवम् ॥ १२

अहो वनमिदं दुर्गं झिल्लिकागणनादितम् ।
भैरवैः श्वापदैः कीर्णं शकुन्तैर्दारुणारुतैः ॥ १३

नानाप्रकारैः शकुनैर्वाश्यद्भिर्भैरवस्वनैः ।
सिंहव्याघ्रवराहैश्च वारणैश्चोपशोभितम् ॥ १४

धवाश्वकर्णककुभैर्बिल्वतिन्दुकपाटलैः ।
सङ्कीर्णं बदरीभिश्च किं न्वेतद्दारुणं वनम् ॥ १५

तमुवाच महातेजा विश्वामित्रो महामुनिः ।
श्रूयतां वत्स काकुत्स्थ यस्यैतद्दारुणं वनम् ॥ १६

एतौ जनपदौ स्फीतौ पूर्वमास्तां नरोत्तम ।
मलदाश्च करूशाश्च देवनिर्माणनिर्मितौ ॥ १७

पुरा वृत्रवधे राम मलेन समभिप्लुतम् ।
क्षुधा चैव सहस्राक्षं ब्रह्महत्या समाविशत् ॥ १८

तमिन्द्रं स्नापयन्देवा ऋषयश्च तपोधनाः ।
कलशैः स्नापयामासुर्मलं चास्य प्रमोचयन् ॥ १९

इह भूम्यां मलं दत्त्वा दत्त्वा कारूशमेव च ।
शरीरजं महेन्द्रस्य ततो हर्षं प्रपेदिरे ॥ २०

निर्मलो निष्करूशश्च शुचिरिन्द्रो यदाभवत् ।
ददौ देशस्य सुप्रीतो वरं प्रभुरनुत्तमम् ॥ २१

इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः ।
मलदाश्च करूशाश्च ममाङ्गमलधारिणौ ॥ २२

साधु साध्विति तं देवाः पाकशासनमब्रुवन् ।
देशस्य पूजां तां दृष्ट्वा कृतां शक्रेण धीमता ॥ २३

एतौ जनपदौ स्फीतौ दीर्घकालमरिन्दम ।
मलदाश्च करूशाश्च मुदितौ धनधान्यतः ॥ २४

कस्यचित्त्वथ कालस्य यक्षी वै कामरूपिणी ।
बलं नागसहस्रस्य धारयन्ती तदा ह्यभूत् ॥ २५

ताटका नाम भद्रं ते भार्या सुन्दस्य धीमतः ।
मारीचो राक्षसः पुत्रो यस्याः शक्रपराक्रमः ॥ २६

वृत्तबाहुर्महावीर्यो विपुलास्यतनुर्महान् ।
राक्षसो भैरवाकारो नित्यं त्रासयते प्रजाः ॥ २७

इमौ जनपदौ नित्यं विनाशयति राघव ।
मलदांश्च करूशांश्च ताटका दुष्टचारिणी ॥ २८

सेयं पन्थानमावृत्य वसत्यध्यर्धयोजने ।
अत एव च गन्तव्यं ताटकाया वनं यतः ॥ २९

स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम् ।
मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः ॥ ३०

न हि कश्चिदिमं देशं शक्नोत्यागन्तुमीदृशम् ।
यक्षिण्या घोरया राम उत्सादितमसह्यया ॥ ३१

एतत्ते सर्वमाख्यातं यथैतद्दारुणं वनम् ।
यक्ष्या चोत्सादितं सर्वमद्यापि न निवर्तते ॥ ३२

इति चतुर्विंशः सर्गः ॥

## पञ्चविंशः सर्गः ॥

अथ तस्याप्रमेयस्य मुनेर्वचनमुत्तमम् ।
श्रुत्वा पुरुषशार्दूलः प्रत्युवाच शुभां गिरम् ॥ १

अल्पवीर्या यदा यक्षाः श्रूयन्ते मुनिपुङ्गव ।
कथं नागसहस्रस्य धारयत्यबला बलम् ॥ २

तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ।
विश्वामित्रोऽब्रवीद्वाक्यं शृणु येन बलोत्तरा ॥ ३

वरदानकृतं वीर्यं धारयत्यबला बलम् ।
पूर्वमासीन्महायक्षः सुकेतुर्नाम वीर्यवान् ॥ ४

अनपत्यः शुभाचारः स च तेपे महत्तपः ।
पितामहस्तु सुप्रीतस्तस्य यक्षपतेस्तदा ॥ ५

कन्यारत्नं ददौ राम ताटकां नाम नामतः ।
बलं नागसहस्रस्य ददौ चास्याः पितामहः ॥ ६

न त्वेव पुत्रं यक्षाय ददौ ब्रह्मा महायशाः ।
तां तु जातां विवर्धन्तीं रूपयौवनशालिनीम् ॥ ७

जम्भपुत्राय सुन्दाय ददौ भार्यां यशस्विनीम् ।
कस्यचित्त्वथ कालस्य यक्षी पुत्रं व्यजायत ॥ ८

मारीचं नाम दुर्धर्षं यः शापाद्राक्षसोऽभवत् ।
सुन्दे तु निहते राम सागस्त्यं मुनिपुङ्गवम् ॥ ९

ताटका सह पुत्रेण प्रधर्षयितुमिच्छति ।
भक्षार्थं जातसंरम्भा गर्जन्ती साभ्यधावत ॥ १०

आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवानृषिः ।
राक्षसत्वं भजस्वेति मारीचं व्याजहार सः ॥ ११

अगस्त्यः परमक्रुद्धस्ताटकामपि शप्तवान् ।
पुरुषादी महायक्षी विरूपा विकृतानना ॥ १२

इदं रूपं विहायाथ दारुणं रूपमस्तु ते ।
सैषा शापकृतामर्षा ताटका क्रोधमूर्च्छिता ॥ १३

देशमुत्सादयत्येनमगस्त्यचरितं शुभम् ।
एनां राघव दुर्वृत्तां यक्षीं परमदारुणाम् ॥ १४

गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम् ।
न ह्येनां शापसंसृष्टां कश्चिदुत्सहते पुमान् ॥ १५

निहन्तुं त्रिषु लोकेषु त्वामृते रघुनन्दन ।
न हि ते स्त्रीवधकृते घृणा कार्या नरोत्तम ॥ १६

चातुर्वर्ण्यहितार्थाय कर्तव्यं राजसूनुना ।
नृशंसमनृशंसं वा प्रजारक्षणकारणात् ॥ १७

पातकं वा सदोषं वा कर्तव्यं रक्षता सता ।
राज्यभारनियुक्तानामेष धर्मः सनातनः ॥ १८

अधर्म्यां जहि काकुत्स्थ धर्मो ह्यस्या न विद्यते ।
श्रूयते हि पुरा शक्रो विरोचनसुतां नृप ॥ १९

पृथिवीं हन्तुमिच्छन्तीं मन्थरामभ्यसूदयत् ।
विष्णुना च पुरा राम भृगुपत्नी दृढव्रता ॥ २०

अनिन्द्रं लोकमिच्छन्ती काव्यमाता निषूदिता ।
एतैरन्यैश्च बहुभी राजपुत्र महात्मभिः ।
अधर्मनिरता नार्यो हताः पुरुषसत्तमैः ॥ २१

इति पञ्चविंशः सर्गः ॥

## षड्विंशः सर्गः ॥

मुनेर्वचनमक्लीबं श्रुत्वा नरवरात्मजः ।
राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच दृढव्रतः ॥ १

पितुर्वचननिर्देशात्पितुर्वचनगौरवात् ।
वचनं कौशिकस्येति कर्तव्यमविशङ्कया ॥ २

अनुशिष्टोऽस्म्ययोध्यायां गुरुमध्ये महात्मना ।
पित्रा दशरथेनाहं नावज्ञेयं च तद्वचः ॥ ३

सोऽहं पितुर्वचः श्रुत्वा शासनाद्ब्रह्मवादिनः ।
करिष्यामि न सन्देहस्ताटकावधमुत्तमम् ॥ ४

गोब्राह्मणहितार्थाय देशस्यास्य हिताय च ।
तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः ॥ ५

एवमुक्त्वा धनुर्मध्ये बद्ध्वा मुष्टिमरिन्दमः ।
ज्याघोषमकरोत्तीव्रं दिशः शब्देन पूरयन् ॥ ६

तेन शब्देन वित्रस्तास्ताटकावनवासिनः ।
ताटका च सुसंक्रुद्धा तेन शब्देन मोहिता ॥ ७

तं शब्दमभिनिध्याय राक्षसी क्रोधमूर्च्छिता ।
श्रुत्वा चाभ्यद्रवत्क्रुद्धा यतः शब्दो विनिःसृतः ॥ ८

तां दृष्ट्वा राघवः क्रुद्धां विकृतां विकृताननाम् ।
प्रमाणेनातिवृद्धां च लक्ष्मणं सोऽभ्यभाषत ॥ ९

पश्य लक्ष्मण यक्षिण्या भैरवं दारुणं वपुः ।
भिद्येरन्दर्शनादस्या भीरूणां हृदयानि च ॥ १०

एनां पश्य दुराधर्षां मायाबलसमन्विताम् ।
विनिवृत्तां करोम्यद्य हृतकर्णाग्रनासिकाम् ॥ ११

न ह्येनामुत्सहे हन्तुं स्त्रीस्वभावेन रक्षिताम् ।
वीर्यं चास्या गतिं चापि हनिष्यामीति मे मतिः ॥ १२

एवं ब्रुवाणे रामे तु ताटका क्रोधमूर्च्छिता ।
उद्यम्य बाहू गर्जन्ती राममेवाभ्यधावत ॥ १३

विश्वामित्रस्तु ब्रह्मर्षिर्हुङ्कारेणाभिभर्त्स्य ताम् ।
स्वस्ति राघवयोरस्तु जयं चैवाभ्यभाषत ।। १४

उद्धून्वाना रजो घोरं ताटका राघवावुभौ ।
रजोमेघेन महता मुहूर्तं सा व्यमोहयत् ॥ १५

ततो मायां समास्थाय शिलावर्षेण राघवौ ।
अवाकिरत्सुमहता ततश्चुक्रोध राघवः ॥ १६

शिलावर्षं महत्तस्याः शरवर्षेण राघवः ।
प्रतिहत्योपधावन्त्याः करौ चिच्छेद पत्रिभिः ॥ १७

ततश्छिन्नभुजां श्रान्तामभ्याशे परिगर्जतीम् ।
सौमित्रिरकरोत्क्रोधाद्धृतकर्णाग्रनासिकाम् ॥ १८

कामरूपधरा सद्यः कृत्वा रूपाण्यनेकशः ।
अन्तर्धानं गता यक्षी मोहयन्ती च मायया ।
अश्मवर्षं विमुञ्चन्ती भैरवं विननाद सा ॥ १९

ज्यास्वनं चक्रतुर्वीरौ वज्राशनिसमं तदा ।
मोहिता तेन शब्देन लब्धसंज्ञा चिरात्तदा ॥ २०

ततस्तावश्मवर्षेण ववर्ष क्रोधमूर्च्छिता ।
पुरा नमुचितनया यथा विष्णुपुरन्दरौ ॥ २१

ततस्तावश्मवर्षेण कीर्यमाणौ समन्ततः ।
दृष्ट्वा गाधिसुतः श्रीमानिदं वचनमब्रवीत् ॥ २२

अलं ते घृणया राम पापैषा दुष्टचारिणी ।
यज्ञविघ्नकरी यक्षी पुरा वर्धेत मायया ॥ २३

वध्यतां तावदेवैषा पुरा संध्या प्रवर्तते ।
रक्षांसि संध्याकालेषु दुर्धर्षाणि भवन्ति हि ॥ २४

इत्युक्तस्तु तदा यक्षीमश्मवृष्ट्याऽभिवर्षतीम् ।
दर्शयञ्शब्दवेधित्वं तां रुरोध स सायकैः ॥ २५

सा रुद्धा शरजालेन मायाबलसमन्विता ।
अभिदुद्राव काकुत्स्थं लक्ष्मणं च विनेदुषी ॥ २६

तामापतन्तीं वेगेन विक्रान्तामशनीमिव ।
शरेणोरसि विव्याध सा पपात ममार च ॥ २७

तां हतां भीमसङ्काशां दृष्ट्वा सुरपतिस्तदा ।
साधु साध्विति काकुत्स्थं सुराश्च समपूजयन् ॥ २८

उवाच परमप्रीतः सहस्राक्षः पुरन्दरः ।
सुराश्च सर्वे संहृष्टा विश्वामित्रमथाब्रुवन् ॥ २९

मुने कौशिक भद्रं ते सेन्द्राः सर्वे मरुद्गणाः ।
तोषिताः कर्मणाऽनेन स्नेहं दर्शय राघवे ॥ ३०

प्रजापतेर्भृशाश्वस्य पुत्रान्सत्यपराक्रमान् ।
तपोबलभृतान्ब्रह्मन्राघवाय निवेदय ॥ ३१

पात्रभूतश्च ते ब्रह्मंस्तवानुगमने धृतः ।
सुराणां च महत्कर्म कर्तव्यं राजसूनुना ॥ ३२

एवमुक्त्वा सुराः सर्वे जग्मुर्हृष्टा यथागतम् ।
विश्वामित्रं पूजयित्वा ततः सन्ध्या प्रवर्तते ॥ ३३

ततो मुनिवरः प्रीतस्ताटकावधतोषितः ।
मूर्ध्नि राममुपाघ्राय इदं वचनमब्रवीत् ॥ ३४

इहाद्य रजनीं राम वसेम शुभदर्शन ।
श्वःप्रभाते गमिष्यामस्तदाश्रमपदं मम ॥ ३५

विश्वामित्रवचः श्रुत्वा हृष्टो दशरथात्मजः ।
उवास रजनीं तत्र ताटकाया वने सुखम् ॥ ३६

मुक्तशापं वनं तच्च तस्मिन्नेव तदाऽहनि ॥ ३७

चम्पकाशोकपुन्नागमल्लिकाद्यैः सुशोभितम् ॥ ३८

चूतैश्च पनसैः पूगैर्नारिकेलैश्च शोभितम् ।
वापीकूपतटाकैश्च दीर्घिकाभिरलंकृतम् ॥ ३९

मल्लिकाहेमकूटैश्च मण्डपैरुपशोभितम् ।
रमणीयं हि बभ्राज वनं चैत्ररथं यथा ॥ ४०

निहत्य तां यक्षसुतां स रामः
प्रशस्यमानः सुरसिद्धसङ्घैः ।
उवास तस्मिन्मुनिना सहैव
प्रभातवेलां प्रतिबोध्यमानः ॥ ४१

इति षड्विंशः सर्गः ॥

# सप्तविंशः सर्गः ॥

अथ तां रजनीमुष्य विश्वामित्रो महायशाः ।
प्रहस्य राघवं वाक्यमुवाच मधुरस्वरम् ॥ १

परितुष्टोऽस्मि भद्रं ते राजपुत्र महायशः ।
प्रीत्या परमया युक्तो ददाम्यस्त्राणि सर्वशः ॥ २

देवासुरगणान्वाऽपि सगन्धर्वोरगानपि ।
यैरमित्रान्प्रसह्याजौ वशीकृत्य जयिष्यसि ॥ ३

तानि दिव्यानि भद्रं ते ददाम्यस्त्राणि सर्वशः ।
दण्डचक्रं महद्दिव्यं दास्यामि तव राघव ॥ ४

धर्मचक्रं ततो वीर कालचक्रं तथैव च ।
विष्णुचक्रं तथाऽत्युग्रमैन्द्रमस्त्रं तथैव च ॥ ५

वज्रमस्त्रं नरश्रेष्ठ शैवं पाशुपतं तथा ।
अस्त्रं ब्रह्मशिरश्चैव ऐषीकमपि राघव ॥ ६

देवचक्रं महद्दिव्यं तव दास्यामि राघव ।
ददामि ते महाबाहो ब्राह्ममस्त्रमनुत्तमम् ॥ ७

गदे द्वे चैव काकुत्स्थ मोदकी शिखरी उभे ।
प्रदीप्ते नरशार्दूल प्रयच्छामि नृपात्मज ॥ ८

धर्मपाशं मद्दाम कालपाशं तथैव च ।
वारुणं पाशमस्त्रं च ददाम्यहमनुत्तमम् ॥ ९

अशनी द्वे प्रयच्छामि शुष्कार्द्रे रघुनन्दन ।
ददामि चास्त्रं पैनाकमस्त्रं नारायणं तथा ॥ १०

आग्नेयमस्त्रं दयितं शिखरं नाम नामतः ।
वायव्यं प्रथमं नाम ददामि तव चानघ ॥ ११

अस्त्रं हयशिरो नाम क्रौञ्चमस्त्रं तथैव च ।
शक्तिद्वयं च काकुत्स्थ ददामि तव राघव ।
वधार्थं रक्षसां यानि ददाम्येतानि सर्वशः ॥ १२

कङ्कालं मुसलं घोरं कपालमथ कङ्कणम् ।
धारयन्त्यसुरा यानि ददाम्येतानि सर्वशः ॥ १३

वैद्याधरं महास्त्रं च नन्दनं नाम नामतः ।
असिरत्नं महाबाहो ददामि नृवरात्मज ॥ १४

गान्धर्वमस्त्रं दयितं मानवं नाम नामतः ।
प्रस्वापनप्रशमने दद्यां सौर्यं च राघव ॥ १५

दर्पणं शोषणं चैव सन्तापनविलापने ।
मदनं चैव दुर्धर्षं कन्दर्पदयितं तथा ॥ १६

पैशाचमस्त्रं दयितं मोहनं नाम नामतः ।
प्रतीच्छ नरशार्दूल राजपुत्र महायशः ॥ १७

तामसं नरशार्दूल सौमनं च महाबल ।
संवर्तं चैव दुर्धर्षं मौसलं च नृपात्मज ॥ १८

सत्यमस्त्रं महाबाहो तथा मायाधरं परम् ।
सौरं तेजःप्रभं नाम परतेजोपकर्षणम् ॥ १९

सोमास्त्रं शिशिरं नाम त्वाष्ट्रमस्त्रं सुदारुणम् ।
दारुणं च भगस्यापि शीतेषुमथ मानवम् ॥ २०

एतान्राम महाबाहो कामरूपान्महाबलान् ।
गृहाण परमोदारान्क्षिप्रमेव नृपात्मज ॥ २१

स्थितस्तु प्राङ्मुखो भूत्वा शुचिर्मुनिवरस्तदा ।
ददौ रामाय सुप्रीतो मन्त्रग्राममनुत्तमम् ॥ २२

सर्वसंग्रहणं येषां दैवतैरपि दुर्लभम् ।
तान्यस्त्राणि तदा विप्रो राघवाय न्यवेदयत् ॥ २३

जपतस्तु मुनेस्तस्य विश्वामित्रस्य धीमतः ।
उपतस्थुर्महार्हाणि सर्वाण्यस्त्राणि राघवम् ॥ २४

ऊचुश्च मुदिताः रामं सर्वे प्राञ्जलयस्तदा ।
इमे स्म परमोदाराः किङ्करास्तव राघव ॥ २५

प्रतिगृह्य च काकुत्स्थः समालभ्य च पाणिना ।
मानसा मे भविष्यध्वमिति तानभ्यचोदयत् ॥ २६

ततः प्रीतमना रामो विश्वामित्रं महामुनिम् ।
अभिवाद्य महातेजा गमनायोपचक्रमे ॥ २७

इति सप्तविंशः सर्गः ॥

## अष्टाविंशः सर्गः ॥

प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनः शुचिः ।
गच्छन्नेव च काकुत्स्थो विश्वामित्रमथाब्रवीत् ॥ १

गृहीतास्त्रोऽस्मि भगवन्दुराधर्षः सुरैरपि ।
अस्त्राणां त्वहमिच्छामि संहारं मुनिपुङ्गव ॥ २

